# पाणिनीयप्रवेशः

## भावबोधकः

( परिष्कार्यकृतिः 5/26/2010 12:06 PM )

॥ श्रीः ॥

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥

अनुपासितवृद्धानां विद्या नातिप्रसीदति।

संस्कृतभारत्याः ऐन्द्रखण्डस्य वायव्यप्रान्तः

# विषयानुक्रमणिका


विषयानुक्रमणिका.....iii
आत्मनिवेदनम्.....v
आवश्यकोपकरणानि.....vi
शिबिरम्.....vii
अभ्यासः.....viii
व्याकरणं किम्.....1
पाणिनेः प्रसङ्गः, व्याकरणस्य लक्ष्यम्.....1
प्रत्याहाराः.....1
सूत्रार्थकल्पनव्यवस्था.....3
सूत्रावलोकनम्.....6
सूत्राणि सप्तधा.....7
दशलकाराः.....8
अधिकारसूत्राणि.....9
शिक्षासूत्राणि.....12
अनुवृत्तिः.....16
लकारसूत्रार्थः.....17
लकारसूत्रसूची.....19
प्रथमावृत्तिः.....20
हलन्तशब्दरूपाणि.....20
इत्-प्रकरणम्.....22
सिद्धयः षोढा.....23
अधिकारकुञ्चिका.....23
सुबन्तप्रकरणम् (अमन्तपदानाम्).....24
संज्ञा द्विधा.....27
सुबन्तप्रकरणम् (हलन्तपदानाम्).....27
पूर्वत्रासिद्धम्.....32
तिङन्तप्रकरणम् (पठ्धातुः).....35
गुणः, गुणनिषेधश्च.....42
क्रियापदानां व्युत्पत्तौ गुणः.....44
कारकम्.....50
समासः.....55
संज्ञापरिभाषप्रकरणम् १.....57
संज्ञाप्रकरणम्.....59
परिभाषाप्रकरणम्.....62
सन्धिप्रकरणम्.....64
कृत्प्रकरणम्.....65
चुरादिगणः.....68
णिजन्तप्रकरणम्.....70
तद्धितप्रकरणम्.....71
ग्रन्थपरिचयः.....74
काशिका.....75
सिंहावलोकनम्.....76
विहङ्गमावलोकनम्.....77

# आत्मनिवेदनम्

संस्कृतप्रचारः उड्डीयमानः अस्ति। अस्याः दैवभाषायाः प्रवेशः यदि प्रीत्या क्रियते, प्रेरणा विश्वासश्च जायेते। प्राथमिकस्तरे -- (१) सरलसंस्कृतं न तु सरलीकृतसंस्कृतं, (२) अत्यावश्यकानाम् अंशानाम् एव पाठनं, (३) भावबोधानन्तरम् एव नियमबोधः।

सूत्रव्याकरणक्षेत्रे[1]ऽपि एतानि तन्त्राणि उपयोक्तव्यानि। संस्कृतभाषायाः सामान्यकुशलतायां प्राप्तायाम् एव सूत्रव्याकरणप्रवेशः। आदौ, अष्टाध्याय्याः सरलमुखं दर्शनीयं, मुख्यांशाः एव बोधनीयाः, परिभाषासूत्रस्थाने, तेषां भावः छात्रैः स्वयम् एव अनुभवितव्यः।

क्वचित् वैयाकरणदृष्ट्या अस्पष्टता वा दोषः वा स्यात्। भवतु नाम। प्राथमिकस्तरे भावावगमनम् एव प्रधानलक्ष्यम्। छात्राः शिशवः इव दोषान् कुर्वन्तः, शीघ्रम् एव उड्डयन्ते।

संस्कृतभारत्याः लघुकार्यानुभवात् सरलबोधतन्त्रं किञ्चित् ज्ञातम् इव। पुनः ब्रह्मदत्तजिज्ञासोः कृतिभिः व्याकरणस्य सरलमुखं प्रदर्शितम् इव। एनाभ्यां द्वाभ्याम् ईश्वरार्पितभुजाभ्यां छात्राः व्याकरणस्य सरलमुखं दृष्ट्वा, स्वयम् एव अग्रगामिनः भवेयुः इति विश्वासः। सरस्वतीदेव्याः प्रेरणात् तस्यै एव संस्कृतदेव्यै समर्प्यते कृतिः इयम्।

ग्रन्थोऽयं संस्कृतभाषया एव विरचितः। सामान्यभाषाकौशलं विना, कुतः सूत्रव्याकरणस्य आवश्यकता? शीघ्रम् एव अपेक्षितं कौशलं प्राप्य, अग्रे सरेयुः।

अत्र तु पठनपाठनटिप्पण्यः गृहीताः। यत्र सूत्रस्य अस्पष्टता, पठिता प्रथमावृत्तिं पर्यालोकयेत्। यत्र अपरा अस्पष्टता, पठिता ब्रह्मदत्तजिज्ञासोः युधिष्ठिरमीमांसकस्य च "संस्कृत पठन-पाठन की अनुभूत सरलतम विधि" नामकं ग्रन्थं पर्यालोकयेत्।

---

[1] व्याकरणपदं बहुत्र व्यवह्रियते। अस्यां कृत्याम् अष्टाध्यायीं केन्द्रीकृत्य व्याकरणपदं प्रयुक्तम्। सूत्रव्याकरणं वा उच्यते।



क्वचित् प्रश्नः स्यात् -- कुतः सुबन्तानां तिङन्तानां व्युत्पत्तेः आवश्यकता? रूपं तु रूपावल्यां लभ्येत। समासप्रक्रिया कारकप्रक्रिया मुख्ये -- इति। परन्तु, सुबन्ततिङन्तप्रक्रिययोः सामान्यज्ञानम् अपि अत्यावश्यकम् अष्टाध्याय्याः तन्त्रम् अभिज्ञातुम्। प्रक्रियायाः आकारः तु ज्ञातव्यः।

केभ्यः रचिता कृतिः इयम्? यैः द्वित्रं वर्षं संस्कृतम् अधीतं, येषां सामान्यसम्भाषणकौशलं वर्त्तते च, तेभ्यः। प्रधानलक्ष्यं तु पुनरावृत्तिः, न तु स्वाध्यायः। तथाऽपि कुतूहलिनः मनसि निधाय, कुत्रचित् अधिकं विवरणं दत्तम्। आदौ स्तरेऽस्मिन्, सुपरिचितानाम् अंशानाम् एव सूत्रदृष्ट्या पुनरवलोकनम्, न तु नूतनप्रयोगानां पाठनम्। नूतनरूपसिद्धिः लक्ष्यत्वेन नैव स्वीक्रियते। आवश्यकतायां सत्यां, तत्र तत्र आदौ पठितारः अन्येभ्यः ग्रन्थेभ्यः[2] अपेक्षितानि रूपाणि प्रयोगान् च स्मरन्तु।

यतो हि ग्रन्थोऽयं प्राधीतैः छात्रैः रचितः, भवन्तः पठितारः दोषान् सहमानाः अपि, ते दोषाः भवद्भिः सूचनीयाः इति अस्मत्प्रार्थना। प्रतिस्पन्दना paniniya.pravesha@gmail.com प्रति प्रेषणीया।

-- लेखकाः

# आवश्यकोपकरणानि

- अष्टाध्यायी -- लघुपाठः, अनुवृत्तिसूचीं विना
- शिक्षासूत्राणि -- पाणिनीयपाठः
- प्रथमावृत्तिः -- ब्रह्मदत्तजिज्ञासुना प्रज्ञादेव्या च रचिता

अष्टाध्याय्याः बहवः पाठभेदाः। पक्षे महाभाष्यानुसारी लघुपाठः, अपरत्र काशिकानुसारी वृद्धपाठः। अन्ये पाठाः मध्यगामिनः स्युः। अद्यत्वे उत्तरकालिकः काशिकानुसारी वृद्धपाठः एव

---

[2] संस्कृतभारत्याः विविधग्रन्थाः उपयोगाय स्युः।

प्रचुरतरः। तथाऽपि लघुपाठं मनसि निधाय एव आर्यसमाजीयैः अष्टाध्याय्याः प्रथमावृत्तिः मुद्रिता। तादृशी कृतिः प्रवेशस्तरे अत्यावश्यकी। अतः स्तरेऽस्मिन् सः एव पाठः अङ्गीक्रियते। सत्यानन्दवेदवागीशस्य पाणिनीयशब्दानुशासनकृत्याम् अपेक्षितौ अष्टाध्यायीपाठः शिक्षासूत्रपाठः च लभ्येते।

## शिबिरम्

अस्य ग्रन्थस्य अध्ययनार्थम्, आदौ किञ्चित् दशदिनात्मकं शिबिरं (विंशतिघण्टात्मकं) प्रवर्तयितुं शक्यते[3]। शिबिरे उपस्थापनं, तस्मात् परम् साप्ताहिकवर्गे अभ्यासः। शिबिरस्य आकारः एवं भवितुम् अर्हति --

१) व्याकरणं, पाणिनिः, माहेश्वरसूत्राणि, प्रत्याहाराः, वर्णमाला, सूत्रार्थकल्पनव्यवस्था
२) सूत्राणि सप्तधा, दशलकाराः, अधिकारसूत्राणि, शिक्षासूत्राणि
३) अनुवृत्तिः, इत्प्रकरणम्
४) सुगण् + सुप्
५) वाच् + सुप्
६) पठ् + तिङ्
७) गुणः, गुणनिषेधः, कारकम्
८) समासः, सन्धिः, कृदन्तरूपाणि
९) इडागमः, कृदन्तप्रकरणम्
१०) संज्ञाप्रकरणं / परिभाषाप्रकरणम्

[3] अधिकः कालः आवश्यकः स्यात्। प्रयोगः करणीयः।



## अभ्यासः

सिद्धिं सम्यक् ज्ञातुम्, अभ्यासः आवश्यकः। आदौ, पुस्तकाश्रयात् सम्पूर्णसिद्धिः वक्तव्या। समनन्तरं पुस्तकाश्रयात् सम्पूर्णसिद्धिः लेखनीया। अन्ते, पुस्तकं विना सम्पूर्णसिद्धिः लेखनीया। सदाऽपि सर्वस्य सूत्रस्य अनुवृत्तिः दर्शनीया।

पठनसमये निर्दिष्टपद्धत्या अष्टाध्याय्याः मूलग्रन्थे केचन अङ्काः स्थापनीयाः। पठितानां सूत्राणाम् अभ्यासः अस्मात् अपि मूलपुस्तकात्, प्रतिदिनं कार्यम्।

❒

## व्याकरणं किम्

“प्रयुक्तानाम् इदम् अन्वाख्यानम्” इति प्रसिद्धोक्तिः व्याकरणपदं विवृणोति। नाम, व्याकरणं किञ्चित् उपयोगि साधनं, येन वेदवाङ्मयाद्यवगमः सुलभः भवेत्। आधारः तु शिष्टानां भाषा, तेषां कृतयश्च। व्याकरणद्वारा किञ्चित् रूपं सिद्धम् अपि, असाधु स्यात् यदि तादृशं रूपं न कुत्रापि प्रयुक्तम्।

## पाणिनेः प्रसङ्गः, व्याकरणस्य लक्ष्यम्

पाणिनिः ख्यातः मुनिः, विश्वविद्यालये व्याकरणाध्यापकश्च। पूर्वाचार्यैः विरचिताः व्याकरणग्रन्थाः तस्य उपलभ्यमानाः आसन्। तथाऽपि प्रायेण तासु कृतिषु काश्चन न्यूनताः अनुभूताः अनेन व्याकरणाचार्येण पाणिनिना। अस्मात् हेतोः तेन नूतनग्रन्थः सुरचितः।

अस्य पाणिनेः किं लक्ष्यम्? शिष्यबोधाय कश्चित् नूतनग्रन्थः आवश्यकः आसीत्। अल्पेनैव कालेन, अल्पेनैव प्रयासेन सर्वं बोध्यम्। तस्य काले सर्वमपि कण्ठस्थीक्रियते स्म। अतः सूत्रशैल्या तेन कृतिः रचिता। उद्देशाः के? संक्षिप्तता, स्पष्टता, विश्वतोमुखता इत्यादयः।[4]

## प्रत्याहाराः

पाणिनिना अष्टाध्यायीरचनसमये विभिन्नाक्षराणां ग्रहणस्य आवश्यकता अनुभूता। नाम, “इ उ ऋ ऌ” च पौनःपुन्येन वक्तव्यम् अभवत्। एवमेव अन्येषामपि अक्षराणाम्। एतत् साधयितुं, तेन माहेश्वराणि सूत्राणि रचितानि। नाम, महेश्वरोपासनायाः कुशाग्रबुद्धिः सः प्रेरितः, एतानि सूत्राणि स्वयं रचयामास। अतः उच्यते -- महेश्वरात् आगतानि सूत्राणि माहेश्वरसूत्राणि -- इति।

---

[4] अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥



| | | |
|---|---|---|
| १ | अ इ उ | ण् |
| २ | ऋ ऌ | क् |
| ३ | ए ओ | ङ् |
| ४ | ऐ औ | च् |
| ५ | ह य व र | ट् |
| ६ | ल | ण् |
| ७ | ञ म ङ ण न | म् |
| ८ | झ भ | ञ् |
| ९ | घ ढ ध | ष् |
| १० | ज ब ग ड द | श् |
| ११ | ख फ छ ठ थ | |
| | च ट त | व् |
| १२ | क प | य् |
| १३ | श ष स | र् |
| १४ | ह | ल् |

तानि च पार्श्वे मञ्जूषायां निर्दिष्टानि। प्रथमं सर्वेऽपि स्वराः अन्तर्हिताः। दीर्घप्लुतादिभेदाः ह्रस्वस्वराङ्केष्वेव अन्तर्हिताः। नाम, अ = अ, आ, आ३, अ, अं, अँ इत्यादयः। आहत्य अष्टादशाः ते अकाराः। इदानीम् इतोऽपि विवरणम् अनावश्यकम्।

समनन्तरं ह्, य्, व्, र्, ल् इत्येतानि सर्वाणि अपि व्यञ्जनाक्षराणि ग्रथितानि। यद्यपि ह इति निरूपितं, तत्रत्यस्वरः अकारः उच्चारणमात्रं, वस्तुतया केवलं ह् इति हकार-मात्रं विराजते। एवं सर्वत्र बोध्यम्।

‘अ, इ, उ’ इत्येतानि एव अक्षराणि निर्देष्टुं, परिधिः कथं बोध्यः? किं तन्त्रम्? यत्र यत्र ग्रहणं स्थगनीयं, तत्र तत्र पङ्क्त्यान्ते व्यञ्जनानि स्थापितानि, तेषां च ‘इत्’ इति नाम्ना व्यवहारः। अतः, अण् इत्युक्ते ‘अ, इ, उ’ इति। अक् = अ, इ, उ, ऋ, ऌ। इक् = इ, उ, ऋ, ऌ। अण्, अक्, इक् इत्यादयः प्रत्याहाराः इति कथ्यन्ते। [5]इतः केवलम् अन्येषाम् अक्षराणां ग्रहणार्थम्। स्वयं कदापि न गृहीताः भवन्ति अपरेण इता। बहूनां प्रत्याहाराणां निर्माणं शक्यम्। तथाऽपि पाणिनिना ४२ प्रत्याहाराः एव निर्मिताः।

सामान्यवर्णमाला वर्तते यत्र पङ्क्तिशः -- स्वराः, कवर्गः, चवर्गः इत्यादयः निरूपिताः। तर्हि, कुतः एतेषां माहेश्वरसूत्राणाम् आवश्यकता? एषु माहेश्वरसूत्रेषु वर्गीयव्यञ्जनानि स्तम्भशः गृहीतानि। ञम् नाम वर्गेषु पञ्चमम्। झष् नाम चतुर्थम्। जश् नाम तृतीयम्। खय् नाम प्रथमद्वितीये।

---

[5] इत् इति तकारान्तपदम्। तस्य रूपाणि -- इत्, इतौ, इतः। इतम्, इतौ, इतः। इता, इद्भ्यां, इद्भिः। ... शेषः भवत्-श्ब्दवत्।

किं तर्हि, वर्णमालायाः आवश्यकता नैव अनुभूता पाणिनिना? न तथा। अच् नाम स्वराः, यण् नाम 'य र ल व', शल् नाम 'श ष स ह' च। पुनः वर्गाणां ग्रहणार्थं तन्त्रान्तरम्। अनुनासिकेन उँकारेण सर्वाऽपि वर्गीयव्यञ्जनपङ्क्तिः गृहीता। कुँ नाम 'क ख ग घ ङ', चुँ नाम चवर्गः, टुँ नाम टवर्गः, तुँ नाम तवर्गः, पुँ नाम पवर्गः।

अ = अ, आ, आ३ इत्यादयः इति पूर्वं बोधितम्। कथं तर्हि ह्रस्वः अकारः एव निर्दिष्यते? तपरेण क्रियते। नाम, अत् = ह्रस्वः अकारः एव, न तु दीर्घाकारः, प्लुताकारः वा। एवमेव -- अत्, आत्[6], उत् इत्यादयः।

किमर्थं हकारः द्विवारं, पुनश्च णित् द्विवारं वर्त्तते? कारणम् अस्ति। अस्मिन् स्तरे केवलं चिन्तयामः यत् पाणिनेः केनचन उद्देशेन भवितव्यम् इति। सन्दर्भानुसारं ज्ञायते, किम् अक्षरम् अपेक्षितं पाणिनिना इति। हकारः पाणिना भिन्नाक्षरैः ग्रहणार्थं द्विवारम् अङ्कितः स्यात् इति कृत्वा, अग्रे सरामः।

### अभ्यासः 1

एतान् प्रत्याहारान् वर्णयत -- (१) अक्, (२) अच्, (३) अल्, (४) इक्, (५) एङ्, (६) एच्, (७) खर्, (८) चर्, (९) जश्, (१०) झल्, (११) झश्, (१२) यञ्, (१३) यण्, (१४) वल्, (१५) (१६) वश्, (१६) शर्, (१७) हल्, (१८) हश्॥

## सूत्रार्थकल्पनव्यवस्था

[7]मन्यामहे यत् "आगत्य" इति पदं निर्मातुं प्रयतामहे[8]। एतावता, अस्माभिः एतावत् मात्रं साधितं च इति --

[6] आत् अनावश्यकम् इति अत्र उपेक्ष्यम्। सूत्रेषु क्वचित् श्रूयते च।

[7] पाठेऽस्मिन् उद्देशद्वयं -- (१) परिभाषासूत्राणि अनुक्त्वा तेषां फलबोधः (२) छात्राः पाणिनीयधिया चिन्तयेयुः च इति। यद्यपि तन्त्रम् इदं कृत्रिमं, पठनं सरलीकृतं स्यात्।



आ + गम् + ल्यप्

कथमपि "गम्" इत्यस्य स्थाने "गत्" इति स्थापनीयम्। पाणिनिः कथं साधितवान् इति अनन्तरम्। प्रथमं, स्वम् आत्मानं व्याकरणाचार्यं मत्वा, कथं छात्रान् बोधायामः इति चिन्तनीयम्। प्रायेण किञ्चित् वाक्यं मुखात् निःसरेत् -- "गम्-धातोः स्थाने गत्-इति आगच्छति, यदा पूर्वम् आ-उपसर्गः अस्ति, अनन्तरं ल्यप्-प्रत्ययः अस्ति च" इति। एतं लघ्वंशम् एव बोधयितुं दीर्घं वाक्यम्। व्याकरणशास्त्रे एतादृशाः नियमाः कोटिशः भवेयुः।

> गम्-धातोः स्थाने, गत्-इति आगच्छति, यदा पूर्वम् आ-उपसर्गः अस्ति, अनन्तरं ल्यप्-प्रत्ययः अस्ति च॥

उपरि, रक्तमश्या लेपितम् आवश्यकं स्यात्, किन्तु, अन्यत् सर्वमपि व्यर्थः इव, यतो हि पौनःपुन्येन (सर्वनियमबोधकवाक्ये) एतावत् वक्तव्यं भवति पाणिनिना, सर्वैरपि छात्रैरपि सर्वं पौनःपुन्येन कण्ठस्थीकरणीयं भवति च। अतः काठिन्यम् इदं निवारयितुं किमपि तन्त्रम् आवश्यकम्।

### विभक्तयः

हरीशः इति कश्चित् यात्रिकः जयपुरात् उदयपुरं प्रति गच्छति, यात्रायां मार्गमध्यगः अस्ति च। अतः, अस्माभिः उच्येत, "हरीशः जयपुरात् उदयपुरं गच्छन् अस्ति" इति। पूर्वं विवक्षानुसारं[9] प्रयोगः कश्चित् "हरीशः जयपुरात् उदयपुरे गच्छन् अस्ति" इत्यासीत्।[10] पुराणेषु (सत्यनारायणव्रतकथादिषु) बहुत्र दृश्यते प्रयोगोऽयम्।

[8] आगम्य / आगत्य इति रूपद्वयम् अपि साधु

[9] वक्तुम् इच्छा = विवक्षा

[10] वि॰महाबलेश्वरभट्टैः विरचिते, संस्कृतभारत्याः प्रकाशिते, कारकनामकपुस्तके ६१-तमे पृष्ठे॥ अपि च हलन्तपदानां प्रथमद्वितीययोः विभक्तयोः द्विवचनबहुवचनयोः कुत्रचित् रूपसाम्यम् इति स्मर्तव्यम्। सुगणौ सुगणः यथा॥

"हरीशः जयपुरात् उदयपुरे गच्छन् अस्ति" इत्येवं चित्रं दृष्ट्वा अन्यानि वाक्यानि रचयत।

मार्गमध्यगः हरीशः जयपुरे नास्ति, किन्तु पूर्वम् आसीत्। हरीशः उदयपुरे नास्ति, किन्तु अनन्तरं भविष्यति। एवं पूर्वम् इति बोधयितुं पञ्चमीविभक्तिः, अनन्तरम् इति बोधयितुं सप्तमीविभक्तिः। शक्यः ननु एतादृशः सुपरिचितः विभक्तिप्रयोगः? एवमेव अपेक्षितपरिवर्तनस्थानस्य निर्देशाय षष्ठी, अपेक्षितस्य आदेशस्य प्रथमा[11]।

> गम्-धातोः स्थाने गत्-इति आगच्छति, यदा पूर्वम् आ-उपसर्गः अस्ति, अनन्तरं ल्यप्-प्रत्ययः अस्ति च॥

तन्त्रे लब्धे, अस्माभिः रचितं वाक्यं संक्षेपीकुर्मः -- "गम्-धातोः गत्, आ-उपसर्गात्, ल्यप्-प्रत्यये" इति।

[11] आगमस्य अपि प्रथमा विभक्तिः एव।



संप्रति, रक्तवर्णेन लेपनम् अनावश्यकं, यतो हि सर्वं रक्तमयं भवति ! एवं सदा वयं पाणिनिधिया (नाम वयम् एव वैयाकरणाः इति धिया) अग्रेऽपि पठामः। तेन, न केवलं नियमबोधः, प्रत्युत सहजः भवति सः बोधः।

## सूत्रावलोकनम्

अनेन प्राप्ततन्त्रज्ञानेन, पाणिनेः किञ्चित् निजसूत्रम् अवलोकयन्तः, सूत्रार्थं कल्पयामः

> इकः (६,१) यण् (१,१) अचि (७,१)

इक्, यण्, अच् च त्रयः प्रत्याहाराः। इक् = इ, उ, ऋ, ऌ। यण् = य् व् र् ल्। अच् = सर्वे स्वराः॥ यत्र षष्ठीविभक्तिः, तया निर्दिष्टस्य भागस्य परिवर्तनम् अपेक्षितं, सः च भागः स्थानी इति नाम्ना व्यवह्रियते। यत्र पञ्चमीविभक्तिः, तया स्थानिनः पूर्वं स्थीयते। यत्र सप्तमीविभक्तिः, तया स्थानिनः परं स्थीयते । यत्र आदेशस्य प्रथमाविभक्तिः, तया स्थानिनम् अपगमय्य, तत्स्थाने स्थीयते।

तर्हि को वा सूत्रार्थः? "इकः स्थाने, अचि परे, यण्-आदेशः भवति"। अथवा -- {इ,उ,ऋ,ऌ}-इत्येतेषां स्थानेषु, स्वरे परे, {य्,व्,र्,ल्}-इत्येते आदेशाः भवन्ति।

### अभ्यासः 2

ससूत्रं सन्धिं कुरुत -- (१) यदि + अपि (२) यदि + आकाङ्क्षति (३) यदि + उक्तम् (४) यदि + ऊहा (५) यदि + ऋणम् (६) यदि + ऌकारः (७) यदि + एकः (८) यदि + ऐश्वरम् (९) यदि + ओदनः (१०) यदि + औपगवः (११) कुमारी + अत्र (१२) कुमारी + आनयति (१३) मधु + इदम् (१४) पितृ + ऐश्वर्यम्

### अयवायावसन्धिः

एवमेव अग्रिमसूत्रार्थं कल्पयामः

> एचः (६,१) अय्-अव्-आय्-आवः (१,३) अचि (७,१)

एचः स्थाने, अचि परे, अयवायाव-इति आदेशाः भवन्ति। अथवा -- {ए,ओ,ऐ,औ}-इत्येतेषां स्थानेषु, {स्वरे} परे, {अय्-अव्-आय्-आव्}-इति आदेशाः भवन्ति।

उदाहरणानि कानि? आगच्छति + अत्र = आगच्छत् + {इ + अ} + त्र। अत्र, "इको यणचि" इत्यस्मात्, इ-कारस्य स्थाने यकारादेशः।

आगच्छत् + इ + अ + त्र

आगच्छत् + य् + अ + त्र

आगच्छत्यत्र

एवमेव, "संस्कृते + इच्छा" इत्यत्र, "एचोऽयवायावः" इत्यनेन सूत्रेण --

संस्कृत् + ए + इ + च्छा

संस्कृत् + अय् + इ + च्छा

संस्कृतयिच्छा

### अभ्यासः 3

ससूत्रं सन्धिं कुरुत -- (१) तौ + ऋषी (२) लभ्यते + ओदनः (३) गुरो + अस्तु (४) तस्मै + उत्तरम् (५) भो + अति (६) गृहे + उपविशति (७) भगिन्यै + अभिनन्दनानि (८) ने + अतः (९) अश्विनौ + इव (१०) गै + अथः

## सूत्राणि सप्तधा

अष्टाध्याय्यां सूत्राणि सप्तधा। सर्वाणि अपि सूत्राणि कीदृशानि इति परीक्षायां पृच्छ्यते, अतः विषयोऽयं ज्ञातव्यः -- एतादृशीं भ्रान्तिं त्यजत।

विधिसूत्राणि परिणामं कुर्वन्ति। किन्तु, प्रश्नाः आविर्भवन्ति -- विधिसूत्राणि कुत्र प्रयोक्तव्यानि? कुत्र न प्रयोक्तव्यानि? कथं प्रयोक्तव्यानि? -- इत्यादयः। एतेषां प्रश्नानां समाधानम् अपि पाणिनिः सूत्रद्वारा एव साधितवान् इति ज्ञातव्यम्। अतः सूत्राणि बहुधा।



1. अधिकार -- अधिक्रियन्ते पदार्थाः यैः। शीर्षकानि इव निर्दिष्टेषु भागेषु तिष्ठन्ति।
2. संज्ञा -- सम्यक् जानीयुः यया। अपरिचितपदानां नामकरणं कृतं संज्ञासूत्रैः।
3. परिभाषा -- परितः सर्वतः भाष्यन्ते नियमाः याभिः। सूत्रप्रयोजनं सूत्रार्थं च स्पष्टीकर्तुम् एतानि सूत्राणि।
4. विधि -- यो विधीयते, सः विधिः विधानं वा। सामान्यसूत्रं येन किञ्चित् परिणामजनकं कार्यं निर्दिष्टं भवति।
5. निषेध -- निषिध्यन्ते निवार्यन्ते कार्याणि यैः। विधिसूत्राणाम् अपवादाः।
6. नियम -- नियम्यन्ते निश्चीयन्ते प्रयोगाः यैः। विधिसूत्रकेन्द्रं लघ्वीकुर्वन्ति।
7. अतिदेश -- अतिदिश्यन्ते तुल्यतया विधीयन्ते कार्याणि यैः। विधिसूत्रकेन्द्रं विशालीकुर्वन्ति।

## दशलकाराः

दशलकाराः अस्माकं परिचिताः एव। तद्द्वारा अग्रे किञ्चित् नूतनं पठामः। अतः उदाहरणद्वारा विषयं स्मरामः। लकाराः कालबोधकाः भावबोधकाः वा।

- लट् -- रामः इदानीं गच्छति
- लिट् -- रामः द्वापरयुगे जगाम
- लुट् -- रामः मासानन्तरं गन्ता
- लृट् -- रामः सायं गमिष्यति
- लेट् -- (वेदे एव प्रयोगः, अत्र न उदाह्रियते)
- लोट् -- रामः गच्छतु
- लङ् -- रामः गतमासे अगच्छत्
- लिङ् -- रामः अवश्यं गच्छेत्
- लुङ् -- रामः प्रातः अगमत्
- लृङ् -- यदि रामः न अगमिष्यत्, एकपत्नीधर्मः न अभविष्यत्

यतः लट् लिट् इत्यादीनाम् आदौ ल-कारः तिष्ठति, एते लकाराः इति अभिधीयन्ते। आदौ सदा ल्-कारः, अन्ते ङ्-कारः ट्-कारः वा। मध्ये क्रमेण स्वराः। प्रथमं टान्तलकाराः षट्, पुनः ङान्तलकाराः चत्वारः। एतादृशं नामकरणं कृतं पाणिनिना।

### अभ्यासः 4

- के लकाराः कालबोधकाः? कः च तेषां कालः (भूतः / वर्त्तमानः/ भविष्यान्)?
- के च लकाराः भावबोधकाः?

## अधिकारसूत्राणि

अष्ट अध्यायाः सन्ति अस्याम् इति अष्टाध्यायी। प्रत्येकस्मिन् अध्याये पादचतुष्टयम्। प्रतिपादे बहूनि सूत्राणि। अतः सूत्रनिर्देशार्थं सङ्ख्यात्रयं -- १.४.२३ -- यथा। नाम प्रथमाध्याये चतुर्थपादे त्रयोविंशतितमं सूत्रम्।

यदा ग्रन्थालये अपरिचितपुस्तकं परिशीलयामः, वर्णितविषयान् अभिज्ञातुं जिज्ञासवः वयम्। तथैव, अष्टाध्याय्यां के विषयाः? उक्तम् एतावता यत् अधिकारसूत्रं शीर्षकम् इव। तानि शीर्षकाणि दृष्ट्वा, जिज्ञासा तृप्तिं गच्छति। अलं विस्तरेण। कानि अष्टाध्याय्याः मुख्यानि अधिकारसूत्राणि? प्रत्येकं तस्य च कः परिधिः?

| | | |
|---|---|---|
| कारके | १.४.२३ | १.४.५५ |
| *प्राक्कडारात्* समासः | २.१.३ | २.२.३८ |
| प्रत्ययः | ३.१.१ | ५.४.१६० |
| परश्च | ३.१.२ | ५.४.१६० |
| धातोः | ३.१.९१ | ३.४.११७ |
| कृत् *अतिङ्* | ३.१.९३ | ३.४.११७ |
| कृत्याः | ३.१.९५ | ३.१.१३२ |
| भूते | ३.२.८४ | ३.२.१२२ |
| ङ्याप्प्रातिपदिकात् | ४.१.१ | ५.४.१६० |
| तद्धिताः | ४.१.७६ | ५.४.१६० |
| संहितायाम् | ६.१.७० | ६.१.१५१ |
| अङ्गस्य | ६.४.१ | ७.४.९७ |
| पदस्य | ८.१.१६ | ८.३.५४ |

*तयोर्य्वावचि* संहितायाम्[12] ८.२.१०८ ८.४.६७

बहुशः कानिचन उपरि निर्दिष्टानि सूत्रपदानि परिचितानि श्रुतानि वा स्युः -- कारकं, समासः, धातुः, प्रत्ययः, तद्धितः, कृत्, पदं, प्रातिपदिकं यथा। पुनः वर्णयामः एव।

यदा सामान्यपुस्तकं पठामः, कस्मिन् भागे स्मः इति पुटस्य मूर्ध्नि पादे वा भवति एव। अस्माभिः तादृशं तन्त्रम् अनुकरणीयम् । रक्तमशीलेखन्या कथञ्चित् मूलपुस्तके स्थूलाङ्कः स्थापनीयः, सङ्केतः इव (यथा पुटात् स्फुरति इव)। पुटदर्शनमात्रेण ज्ञातव्यं यत् अधिकारसूत्रम् इदं विराजते इति। पुनः, सूत्रपार्श्वे कुत्र पर्यन्तम् अधिकारोऽयम् इति निर्देशः अपि आवश्यकः।[13] कार्यम् इदं न उपेक्षणीयम्।

कारके (१.४.२३) इति अधिकारसूत्रं, तस्य अधिकारः १.४.५५ पर्यन्तं च। अतः सूत्रपार्श्वे १.४.५५ इति लेखनीयं (५५ पर्याप्तं स्यात्, यतो हि तस्मिन् एव पादे निवृत्तिः)। अधः चित्रं दर्शितम्। इदानीं तु कारकाधिकारः अङ्कनीयः, ५५-तमे सूत्रे "," इत्यनेन तस्य निवृत्तिश्च सूचनीया। शेषः क्रमेण अग्रे अङ्क्यते।

---

[12] विधिसूत्रम् इदम्। तथाऽपि प्रामुख्यवशात् आदौ एव अङ्क्यते।

[13] पुस्तकानि उपलभ्यन्ते यत्र सर्वेषां पदानाम् अनुवृत्तिकेन्द्रम् अङ्कितम्। तादृशं नैव उपयोग्यम्। मूलसूत्रपाठः एव ग्रन्थे अङ्कितः स्यात्, तस्मिन् भवताम् अङ्कनकार्यम् इदम्।

५५ २३ कारके।
२४ ध्रुवमपायेऽपादानम्।
२५ भीत्रार्थानां भयहेतुः।
२६ पराजेरसोढः।
२७ वारणार्थानामीप्सितः।
२८ अन्तर्द्धौ येनादर्शनमिच्छति।
२९ आख्यातोपयोगे।
३० जनिकर्त्तुः प्रकृतिः।
३१ भुवः प्रभवः।
३२ कर्मणा यमभिप्रैति स सम्प्रदानम्।
३३ रुच्यर्थानां प्रीयमाणः।
३४ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः।
४५ आधारोऽधिकरणम्।
४६ अधिशीङ्स्थासां कर्म।
४७ अभिनिविशश्च।
४८ उपान्वध्याङ्वसः।
४९ कर्त्तुरीप्सिततमं कर्म।
५० तथायुक्तं चानीप्सितम्।
५१ अकथितं च।
५२ गतिबुद्धिप्रत्यवसानार्थशब्द-कर्माकर्मकाणामणि कर्त्ता स णौ।
५३ हृक्रोरन्यतरस्याम्।
५४ स्वतन्त्रः कर्त्ता।
५५ तत्प्रयोजको हेतुश्च।
५६ प्राग्रीश्वरान्निपाताः। ९७
५७ चादयोऽसत्त्वे।

मुख्याधिकारसूत्राणि निर्दिष्टानि कोष्ठके। अर्थः ज्ञातः स्यात्। तथाऽपि किञ्चित् उच्यते --

- कारके -- कारकं नाम क्रियान्वयि पदम्। किमपि पदं करणकारकसंज्ञां[14] प्राप्य, तृतीयविभक्त्या क्रियापदेन अन्वेति। रामः हस्तेन खादति इत्यत्र हस्त-पदस्य करण-संज्ञा। अनन्तरं तृतीयाविभक्तिः।
- समासः -- अत्र तत्पुरुषादि समासभेदाः वर्णिताः सन्ति।
- प्रत्ययः -- अत्र विभिन्नप्रत्ययाः वर्णिताः सन्ति -- क्त्वा, ल्यप्, घञ् यथा।
- परश्च -- वर्णितप्रत्ययाः स्थानिनः परम् आगच्छन्ति
- धातोः -- प्रत्ययाधिकारे एते प्रत्ययाः धातोः अनन्तरं विधीयन्ते
- कृत् -- एते धातुप्रत्ययाः कृत्प्रत्ययाः इति अभिधीयन्ते
- कृत्याः -- एते धातुप्रत्ययाः न केवलं कृत्संज्ञकाः परन्तु कृत्यसंज्ञकाः अपि

[14] किं करणसंज्ञा भवति उत केवलं कारकसंज्ञा। अत्र इयं भ्रान्तिजनकचर्चा मास्तु।



- भूते -- एते धातुप्रत्ययाः भूतार्थे प्रयुक्ताः
- ङ्याप्प्रातिपदिकात् -- एते प्रत्ययाः प्रातिपदिकात् परं, स्त्रीप्रत्ययात् परं वा विधीयन्ते। ङी आप् च इति स्त्री प्रत्ययचिह्नौ।
- तद्धिताः -- एते प्रातिपदिकप्रत्ययाः तद्धितसंज्ञकाः
- संहितायाम् -- अस्मिन् विषये सन्धिकार्यं बोधितम्
- अङ्गस्य -- अङ्गस्य परं प्रत्ययः, प्रत्ययात् पूर्वं अङ्गम्। अत्र अङ्गकार्यं विहितम्
- पदस्य -- सिद्धरूपं पदं स्यात्। क्रियापदं नामपदं च यथा

संहितायाम् इति द्विवारं दृष्टम्। कुतः? अग्रे निरूप्यते।

## शिक्षासूत्राणि

संस्कृतं भाषितभाषा। कुतः पुनरुक्तिः? शोचनीया ननु वर्तमाना स्थितिः यत्र केचन न विश्वसन्ति यत् भाषा इयं प्रयुक्ता इति। भाषितभाषायाम् अस्याम्, उच्चारणस्य प्रभावः अधिकः। पदमध्ये अङ्गप्रत्यययोः नित्यसन्धिः।[15] उपसर्गेण नित्यसन्धिः। समासेऽपि नित्यसन्धिः। एषोऽयं सन्धिः सहजः, न तु कृत्रिमः।

उदाहरणम्। अकारम् इकारं च शीघ्रं वदत -- इ अ, इ अ, इ अ -- यथा। उत्पद्यते यकारः। तथैव -- उ अ, उ अ, उ अ। उत्पद्यते वकारः। औपचारिकदृष्ट्या उच्चारणस्थानसाम्यं वर्त्तते इकारयकारयोः, उकारवकारयोः च। अतः इकारस्य स्थाने यकारः, उकारस्य स्थाने वकारः। एतान् अंशान् सम्यक् बोधयितुं पाणिनिः शिक्षासूत्राणि रचयामास। सूत्राणि एतानि अष्टाध्याय्यां न वर्त्तन्ते। पृथक् ग्रन्थोऽयम्।

[15] संहितैकपदे नित्या, नित्या धातूपसर्गयोः। नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते॥

## स्थानप्रकरणम्

- अ-कुँ-ह-विसर्जनीयाः कण्ठ्याः[16]
- इ-चुँ-य-शाः तालव्याः
- ऋ-टुँ-र-षाः मूर्धन्याः
- ऌ-तुँ-ल-साः दन्त्याः
- वकारो दन्त्यौष्ठ्यः
- उ-पूँपध्मानीयाः ओष्ठ्याः
- एदैतौ कण्ठ्यतालव्यौ
- ओदौतौ कण्ठ्यौष्ठौ
- ङञणनमाः स्वस्थाननासिकास्थानाः

सर्वाणि अक्षराणि बहुवारम् उक्त्वा सूक्ष्मपरिशीलनं करणीयम्। स्थानानि पञ्च -- कण्ठात् आरभ्य तानि सन्ति -- कण्ठः, तालुः, मूर्धनी, दन्ताः, ओष्टौ च -- यथा चित्रे दर्शितम्। ज्ञायते यत् उच्चारणशैलीं परिशील्य सूत्राणि इमानि निर्मितानि। यदि क्वचित् अस्माकं कल्पना सूत्रेभ्यः भिन्ना स्यात्, न कोऽपि दोषः। तथाऽपि पाणिनेः तात्कालिकवचनं स्वीकार्यम्। इमानि सूत्राणि स्पष्टानि। अन्तिमसूत्रं किञ्चित् विव्रियते। कवर्गीयः ङकारः कण्ठ्यः नासिक्यश्च। एवं तेषां ङञणनमानां पूर्वबोधितस्थानं, नासिकास्थानं च इति अर्थः।

| स्थानम् | अक्षराणि |
|---|---|
| कण्ठः | अ आ, क ख ग घ ङ, ह, ः |
| मूर्धनी | ऋ ॠ, ट ठ ड ढ ण, र, ष |
| तालुः | इ ई, च छ ज झ ञ, य, श |
| दन्तः | ऌ, त थ द ध न, ल, स |
| दन्तः + ओष्ठः | व |
| ओष्ठः | उ ऊ, प फ ब भ म, (उपध्मानीयः) |
| कण्ठः + तालुः | ए, ऐ |
| कण्ठः + ओष्ठः | ओ, औ |
| नासिका च | ञ म ङ ण न |

[16] यथा माहेश्वरसूत्राणां प्रसङ्गे विवृतं, कुँ = कवर्गः इत्यादि।



## आभ्यन्तरप्रयत्नप्रकरणम्

- स्पृष्टकरणाः स्पर्शाः (कादयो मावसानाः[17] स्पर्शाः)
- ईषत्स्पृष्टकरणा अन्तःस्थाः (यरलवा अन्तःस्थाः)
- ईषद्विवृतकरणा ऊष्माणः (शषसहा ऊष्माणः)
- विवृतकरणाः स्वराः (स्वराः एवाचः)

अक्षरोच्चारणसमये, स्थाने स्पर्शः अस्ति उत न इति आभ्यन्तरप्रयत्नम्। ईषत् = किञ्चित्, विवृतम् = उद्घाटितम्। अतः चत्वारि सोपानानि -- (१) स्पृष्टम् (२) किञ्चित् स्पृष्टम् (३) किञ्चित् उद्घाटितम् (४) उद्घाटितं -- चेति।

"क ख" इत्यादीनि कवर्गीयव्यञ्जनानि उच्चार्य परिशीलयत। कण्ठदेशः विरुद्धः, वायोः निर्गमात् प्राक्॥ तथैव स्वरान् उच्चार्य परिशीलयत। कण्ठदेशः विवृतः॥ अन्तःस्थाः उच्चार्याः अधुना। कश्चित् लघुस्पर्शः इव॥ अन्ते ऊष्माणः उच्चार्याः। न विवृतं, न वा स्पृष्टम्। परन्तु, अन्तःस्थेभ्यः किञ्चित् अधिकविवृतता वर्त्तते एव॥ कोष्ठके सूत्रफलं दर्शितम् --

| प्रयत्नम् | प्रत्याहारः | अक्षराणि |
|---|---|---|
| स्पृष्टम् | झय् | कुँ, चुँ, टुँ, तुँ, पुँ |
| ईषत्स्पृष्टम् | यण् | य, र, ल, व |
| ईषद्विवृतम् | शर् | श, ष, स, ह |
| विवृतम् | अच् | स्वराः |

[17] ककारात् आरभ्य मकारपर्यन्तम् ( कुँ, चुँ, टुँ, तुँ, पुँ ) इत्यर्थः।

## बाह्यप्रयत्नप्रकरणम्

उच्चारणे आरब्धे, प्रयत्नं बोधितं प्रकरणेऽस्मिन्

- वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयाः विवृतकण्ठाः श्वासानुप्रदानाश्चाघोषाः [18]
- एके अल्पप्राणाः, इतरे महाप्राणाः[19]
- वर्गाणां तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ नासिक्याश्च संवृतकण्ठा नादानुप्रदा घोषवन्तश्च
- (तृतीया अन्तःस्थाश्च अल्पप्राणाः, इतरे महाप्राणाः) [20]
- यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः
- शादयो ऊष्माणः[21]

कखौ अक्षरौ उच्चार्य, गघौ अक्षरौ शब्दयत। कण्ठे कश्चित् लघुभेदः वर्त्तते। कखयोः उच्चारणे कण्ठदेशः विवृततरः, गघयोः उच्चारणे संवृततरः। मातृभाषावशात् भवदुच्चारणं भिन्नं स्यात्। प्रायेण तात्कालिकगघयोः उच्चारणे मुखम् अपि विवृततरं, येन कण्ठः अपि विवृततरः।

पुनः कखौ गघौ च उचारयत। वायोः निःसरणं विनाऽपि गघयोः कण्ठे कम्पनं (नादः) शक्यम्। तथा कखयोः न। कखयोः शब्दः वायुना समेतः एव श्रूयते। अतः कखौ श्वासानुप्रदौ अघोषौ, परन्तु गघौ नादानुप्रदौ घोषौ।

कोष्ठके सर्वसारं दर्शितम्। रेखया महाप्राणता निर्दिष्टा।

| खर् | | | हश् | | | |
|---|---|---|---|---|---|---|
| क | ख | ः | ग | घ | ं | ङ |
| च | छ | श | ज | झ | य | ञ |

[18] यमाः अत्र उपेक्षिताः

[19] एके प्रथमाः (कचटतपाः), इतरे द्वितीयाः (खछठथफाः) शषसाश्च।

[20] इतरे चतुर्थाः हकारश्च।

[21] शादयः शषसहाः।



| ट | ठ | ष | | ड | ढ | र | ण |
|---|---|---|---|---|---|---|---|
| त | थ | स | | द | ध | ल | न |
| प | फ | | ह | ब | भ | व | म |
| विवृतकण्ठाः | | | संवृतकण्ठाः | | | | |
| श्वासानुप्रदाः | | | नादानुप्रदाः | | | | |
| अघोषाः | | | घोषवन्तः | | | | |

आभ्यन्तरप्रयत्नं वायोः निर्गमात् प्राक्। बाह्यप्रयत्नम् आभ्यन्तरप्रयत्नानन्तरं क्रियते।

### अभ्यासः 5

माहेश्वरसूत्राणि शिक्षासूत्रदृष्ट्या परिशीलयत। अपि, तानि सूत्राणि स्थानानुगुणं रचितानि? आभ्यन्तरप्रयत्नानुगुणं रचितानि? बाह्यप्रयत्नानुगुणं रचितानि?

माहेश्वरसूत्रेषु यत्र स्थानुगुणं प्रयत्नानुगुणं वा नैव रचितं, वर्णमाला तदनुगुणं किं रचिता? तादृशीं पङ्क्तिं ग्रहीतुं च पाणिनेः किञ्चित् तन्त्रं किं वर्त्तते?

# अनुवृत्तिः

| | |
|---|---|
| १ | संस्कृतम् |
| २ | प्रतिदिनं दशनिमेषात्मकं पठनम् |
| ३ | लेखनं च |
| ४ | पञ्चनिमेषात्मकं वा |

एतानि चत्वारि सम्भाषणान्दोलनस्य सूत्राणि इति चिन्तयत। अर्थः तु स्पष्टः ननु? प्रतिदिनं दशनिमेषात्मकं संस्कृतपठनं भवतु। प्रतिदिनं दशनिमेषात्मकं लेखनं च भवतु। लेखनं पञ्चनिमेषात्मकं वा भवतु।

अत्र प्रश्नः स्यात्। अन्तिमसूत्रं किमर्थं लेखनसम्बद्धम् एव? पठनपदम् अनुवर्त्तते यावत् बाधकः नास्ति। लेखनपदेन पठनपदं बाधितम्। अतः, ततः लेखनम् इत्यस्यैव अनुवृत्तिः। एवमेव अन्यत्र अपि बोध्यम्। यदि प्रश्नः शिष्टः, चिन्ता मास्तु। अग्रे सरामः।

सम्पूर्णसूत्राणि कानि?

| | |
|---|---|
| २ | प्रतिदिनं दशनिमेषात्मकं संस्कृतपठनम् |
| ३ | प्रतिदिनं दशनिमेषात्मकं संस्कृतलेखनं च |
| ४ | प्रतिदिनं पञ्चनिमेषात्मकं संस्कृतलेखनं वा |

सः एव अर्थः औपचारिकरीत्या अधुना कल्पितः। कानिचनपदानि उपरिष्ठेभ्यः सूत्रेभ्यः अधो गच्छन्ति। तानि च पदानि अनुवृत्तिपदानि इति अभिधीयन्ते। अधिकारपदं नाम महती अनुवृत्तिः।

### अभ्यासः 6

कस्मिन् अपि प्रसङ्गे पञ्चषाणि सूत्राणि रचयत। पूर्ववत् अनुवृत्त्या सम्पूर्णसूत्रं दर्शयत च।

## लकारसूत्रार्थः

लकाराः कालबोधकाः भावबोधकाः वा। कालबोधकलकाराः भूतकालबोधकाः, वर्त्तमानकालबोधकाः, भविष्यत्कालबोधकाः वा। लकाराः अपि प्रत्ययाः एव। अतः कस्मात् अपि अङ्गात् परम् एते लकाराः विहिताः भवन्ति।

प्रत्ययः (३.१.१) इत्यस्मिन् अधिकारे कानि अङ्गानि निर्दिष्टानि? अङ्गात् परं प्रत्ययः इत्यस्मात् अङ्गानि पञ्चम्यन्तपदानि स्युः[22]। तादृशे च द्वे अङ्गे अस्माभिः अवलोकिते -- "धातोः", "प्रातिपदिकात्" च। ज्ञातं यत् धातोः परम् एव लकारप्रत्ययाः वर्त्तन्ते, न तु

[22] स्थानी रिक्तम्। तस्मात् प्राक् अङ्गेन भवितव्यम्। "पूर्वम्" इति बोधयितुं पञ्चमीविभक्तिश्च।



प्रातिपदिकात् परम् इति। अतः "धातोः" इत्यस्मिन् अधिकारे (३.१.९१ - ३.४.११७), एतानि सूत्राणि अन्वेष्टव्यानि।

तस्मिन् एव "धातोः" अधिकारे, "भूते" (३.२.८४) इति अधिकारसूत्रान्तरम्। अत्र, भूते नाम विषयसप्तमी, न तु परसप्तमी। इत्युक्ते भूते अर्थे, न तु भूते परे। कदा विषयसप्तमी, कदा परसप्तमी इति पृष्टे सति, सन्दर्भानुसारं स्पष्टतया ज्ञायते । भूतं नाम्ना कोऽपि प्रत्ययः नास्ति, अतः भूतार्थे इति ज्ञातव्यम्। भूतकालबोधकलकाराः "धातोः" इत्यस्मिन् अधिकारे, "भूते" इतयस्मिन् अधिकारे च स्युः।

कालबोधकलकाराः त्रिधा ननु? यथा "भूते" इत्यस्य अधिकारः, तथैव "वर्त्तमाने", "भविष्यति" इत्यपि "धातोः" इत्यस्मिन् अधिकारे कुत्रचित् स्यातां किम्? अहो, स्तः !

| | | |
|---|---|---|
| धातोः | ३.१.९१ | ३.४.११७ |
| भूते | ३.२.८४ | ३.२.१२२ |
| वर्त्तमाने | ३.२.१२३ | ३.३.१ |
| भविष्यति | ३.३.३ | ३.३.१७ |

भूतकाललकारसूत्राणि "भूते" इत्यस्मिन् अधिकारे स्युः। तथैव अन्ये सर्वेऽपि कालबोधकलकाराः यथास्थानं स्युः। भावबोधकलकाराः कुत्रः स्युः? कुत्रापि "धातोः" इत्यस्मिन् अधिकारे, परन्तु त्रिषु कालबोधकाधिकारेषु न।

"भूते" इत्यत्र संपूर्णसूत्रम् अनुवर्त्तते। तादृशं सूत्रम् अधिकारसूत्रम्। अन्यत्र, सूत्रस्य कश्चित् भागः (कानिचन पदानि) एव अनुवर्तेत। तादृशानि पदानि अनुवृत्तिपदानि। महती अनुवृत्तिः अधिकारनाम्ना व्यवह्रियते।

- भूतकाले (३.२) लुङ् (११०), लङ् (१११), लिट् (११५)
- वर्त्तमानकाले (३.२) लट् (१२३)
- भविष्यति (३.३) लृट् (१३), लुट् (१५)

- भावबोधकाः (३.३) लुङ् (१३९), विधिलिङ् (१६१), लोट् (१६२), आशीर्लिङ् (१७३)

नाम, अपेक्षितानुवृत्तौ एव पाणिनिना अवधानपूर्वकं सूत्राणि इमानि अष्टाध्याय्यां ग्रथितानि। सर्वत्र, एषां पदानाम् अनुवृत्तिश्च -- धातोः प्रत्ययः परश्च।

"लुङ्" इति सूत्रम्। तत्र "भूते" इत्यस्य अनुवृत्तिः। स्वयं "लुङ्" इति सूत्रं किमपि न बोधयति। अनुवृत्त्या संपूर्णसूत्रं -- धातोः भूते लुङ् प्रत्ययः परश्च [भवति] इति। नाम, अर्थः स्वयम् एव आविष्कृतः यथा। भवन्तः स्वयम् एव अन्येषां सर्वेषाम् अपि सूत्राणाम् अर्थं कल्पयन्तु। उद्देशः अस्ति अनुवृत्तिप्रयोगावलोकनम्। स्तरेऽस्मिन् एषां सूत्राणां स्थूलपरिचयः पर्याप्तः। अग्रे यदा लकारसिद्धिः क्रियते, तदा एव इतोऽपि बोध्यम्।

## लकारसूत्रसूची

३.२.११० (भूते धातोः) लुँङ् (प्रत्ययः परश्च)

३.२.१११ (भूते) अनद्यतने (धातोः) लँङ् (प्रत्ययः परश्च)

३.२.११५ (भूते अनद्यतने) परोक्षे (धातोः) लिँट् (प्रत्ययः परश्च)

३.२.१२३ वर्तमाने (धातोः) लँट् (प्रत्ययः परश्च)

३.३.१३ (क्रियायां क्रियार्थायां भविष्यति धातोः) लृँट् शेषे च (प्रत्ययः परश्च) [23]

३.३.१५ (भविष्यति) अनद्यतने (धातोः) लुँट् (प्रत्ययः परश्च)

३.३.१३९ (भविष्यति) लिँङ्निमित्ते (धातोः) लृँङ् (प्रत्ययः परश्च) क्रियातिपत्तौ [24]

३.३.१६१ विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु (धातोः) लिँङ् (प्रत्ययः परश्च) [25]

[23] "क्रियार्थायां शेषे च" इति उपेक्ष्य अग्रे क्रम्यताम्।

[24] यदि लृङ्लकारः अपरिचितः, सूत्रम् इदम् उपेक्ष्यम्।

[25] विधि॰प्रश्नार्थनेषु इत्यत्र विध्यर्थः पर्याप्तः।



३.३.१६२ (विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नार्थनेषु धातोः) लोँट् च (प्रत्ययः परश्च)

३.३.१७३ आशिषि (धातोः) लिँङ्लोँटौ (प्रत्ययः परश्च)

३.४.७ (छन्दसि) लिँङर्थे (धातोः) लेँट् (प्रत्ययः परश्च)

## प्रथमावृत्तिः

ग्रन्थेऽस्मिन् सूत्रस्य केचन एव अंशाः निरूपिताः भवन्ति। शेषः प्रथमावृत्तौ द्रष्टव्यः। प्रतिसूत्रम् एते अंशाः प्रथमावृत्तौ वर्णिताः -- (१) पदच्छेदः (२) विभक्तिवचने (३) समासविग्रहवाक्यम् (४) अनुवृत्तिः (५) सूत्रार्थः (६) उदाहरणानि, (७) परिशिष्टे सिद्धयः। यदि काऽपि समस्या उदेति, अस्यां प्रथमावृत्त्यां कृत्यां समाधानं शक्यम्। विशेषतया पदपरिचयः, सूत्रार्थः, उदाहरणानि च द्रष्टव्यानि। यदि समाधानं प्रथमावृत्तौ न प्राप्येत, काशिका, अपरा प्रौढा व्याख्या वा आश्रयणीया।

यदा कश्चित् श्लोकं पठामः, तदापि एतादृशान् पदच्छेदाद्यंशान् अवलोकयामः। अष्टाध्याय्याः पठने एषा एव पद्धतिः। प्रथमम् अनुवृत्त्या समेतं संपूर्णसूत्रं विरचय्य, शिष्टं श्लोकवत्।

## हलन्तशब्दरूपाणि

लोके छात्राः आदौ अजन्तपुँल्लिङ्गशब्दरूपाणि पठन्ति। तानि एव सुलभतराणि प्रचुरतराणि ननु। परन्तु, सूत्रैः हलन्तरूपव्युत्पत्तिः सरलतरा। अतः तानि एव अवलोकयामः। आदौ णान्तः सुगण्-शब्दः। रूपम् इदम् अस्माकं परिचितम् --

| | | | |
|---|---|---|---|
| १ | सुगण् | सुगणौ | सुगणः |
| २ | सुगणम् | सुगणौ | सुगणः |
| ३ | सुगणा | सुगण्भ्याम् | सुगण्भिः |
| ४ | सुगणे | सुगण्भ्याम् | सुगण्भ्यः |
| ५ | सुगणः | सुगण्भ्याम् | सुगण्भ्यः |
| ६ | सुगणः | सुगणोः | सुगणाम् |

| ७ | सुगणि | सुगणोः | सुगण्सु |
|---|---|---|---|

अष्टाध्याय्यां सर्वेभ्यः अपि प्रातिपदिकेभ्यः २१ प्रत्ययाः वर्णिताः (७ विभक्तयः, ३ वचनानि)। प्रत्ययादौ प्रत्ययान्ते वा केचित् इतः स्युः (यथा माहेश्वरसूत्रेषु पङ्क्तान्ते इतः वर्त्तन्ते)। इतां प्रयोजनम् अस्ति, किन्तु साक्षात् व्युत्पादितरूपेषु इतः न दृश्यन्ते। अग्रे इत्-प्रकरणं पठामः, येन इतां लोपः भवति। लोपः नाम अदर्शनं, विनाशः वा। इदानीम् अवलोकयामः यत् प्रत्ययान् परिष्कृत्य (इतां लोपं कारयित्वा), सुगण्-शब्दस्य रूपाणि प्रायेण सिद्ध्यन्ते।

| १ | सुँ ⇨ स् | औ | जस् ⇨ अस् |
|---|---|---|---|
| २ | अम् | औट् ⇨ औ | शस् ⇨ अस् |
| ३ | टा ⇨ आ | भ्याम् | भिस् |
| ४ | ङे ⇨ ए | भ्याम् | भ्यस् |
| ५ | ङसिँ ⇨ अस् | भ्याम् | भ्यस् |
| ६ | ङस् ⇨ अस् | ओस् | आम् |
| ७ | ङि ⇨ इ | ओस् | सुप् ⇨ सु |

सुँ इति प्रत्ययः प्रथमविभक्तिबोधकः एवचनबोधकश्च। औ इति प्रत्ययः प्रथमविभक्ति-द्विवचन-बोधकः। जस् इति प्रत्ययः प्रथमविभक्ति-बहुवचन-बोधकः। एवमेव अन्यत्रापि बोध्यम्। कुतः एते प्रत्ययाः इति अग्रे वर्ण्यते। प्रत्ययानाम् अन्ते स्थितस्य सकारस्य स्थाने कथमपि विसर्गादेशः भवति। तदपि अग्रे पठामः।

एतावता, परिष्कृतप्रत्ययैः प्रथमान्तम् एकवचनान्तं (सुँ) रूपं विहाय अन्यानि रूपाणि साधयितुम् शक्नुमः। प्रातिपदिकं + परिष्कृतप्रत्ययः = पदम्। उदाहरणार्थं, प्रथमान्तं बहुवचनान्तं रूपं "सुगणः" इति। सुगण् + जस् = सुगण् + अस् = सुगणस् = सुगणः।

आदिमः प्रश्नः -- कथं प्रत्ययपरिष्कारः? (परिष्कारः नाम इतां लोपः)। अष्टाध्याय्याः इत्-प्रकरणं पठामः।



# इत्-प्रकरणम्

अष्टाध्याय्याः प्रथमाध्याये तृतीयपादे, आदौ कानिचन सूत्राणि सन्ति यस्य प्रयोजनम् अस्ति प्रत्ययपरिष्कारः। मूलाष्टाध्याय्याम् एतानि सूत्राणि अवलोकयत[26]। अधः अनुवृत्त्या संपूर्णसूत्राणि विवृतानि।

अनुनासिकः नाम यत् मुखेन नासिकया च उच्यते। अ इति सामान्यः अननुनासिकः अकारः। अँ इति अनुनासिकः अकारः। क्वचित् ग्रन्थेषु अनुनासिकचिह्नानि दृश्यन्ते।

एते सर्वेऽपि प्रत्ययाः (सुँ औ जस् इत्यादयः) विभक्ति-वचन-बोधक-प्रत्ययाः। अधोनिर्दिष्टेषु सूत्रेषु अनुनासिकचिह्नरहिताः ञि, टु, डु इति धातुपाठे एव प्रयुक्ताः। ताभ्याम् अननुनासिकाभ्यां टुडुभ्यां वर्गीयव्यञ्जनानि गृहीतानि न भवन्ति।

| | |
|---|---|
| १.१.५९ | अदर्शनं लोपः (इति) |
| १.३.२ | उपदेशेऽजनुनासिक इत् |
| १.३.३ | (उपदेशे) हलन्त्यम् (इत्) |
| १.३.४ | (उपदेशे हलन्त्यम् इत्) न विभक्तौ तुँस्माः |
| १.३.५ | (उपदेशे) आदिर्ञिटुडवः (इत्) |
| १.३.६ | (उपदेशे) षः प्रत्ययस्य (आदिः इत्) |
| १.३.७ | (उपदेशे प्रत्ययस्य आदिः) चुँटूँ (इत्) |
| १.३.८ | (उपदेशे प्रत्ययस्य आदिः) लशक्वतद्धिते (इत्) |
| १.३.९ | (इत्) तस्य लोपः |

इदानीम् एनां सर्वेषाम् अपि सूत्राणाम् अर्थकल्पना शक्या। प्रथमं किञ्चित् प्रयत्नं कुरुत। अनन्तरं प्रथमावृत्तिग्रन्थस्थं सुत्रार्थं पठत।

[26] छात्रैः एकैकं अनुवृत्तिपदम् अधोरेखया निर्देष्टव्यम् अष्टाध्यायीकृतौ।

उपदेशः नाम आदिमवचनम्। व्याकरणक्षेत्रे उपदेशः अस्ति -- माहेश्वरसूत्राणि, धातुपाठः, गणपाठः, प्रत्ययाः, आगमाः, आदेशाश्च। उपदेशे सर्वत्र इत्प्रकरणसूत्राणि विधेयानि।

### अभ्यासः 7

उपरिष्ठमञ्जूषायां वर्णितान् सुप्प्रत्ययान् (सुँ औ जस् इत्यादीन्) ससूत्रं परिष्कृत्य, सुगण्-शब्दस्य रुपाणि साधयतु (सुँ-प्रत्ययान्तरूपं विहाय)। इतः आरभते सूत्रप्रयोगः। स्वागतम्।

एतेषां परिष्कारं कुरुत -- ष्वन् (प्रत्ययः), षुञ् (धातुः), डुकृञ् (धातुः), लच् (तद्धितप्रत्ययः)

## सिद्धयः षोढा

अष्टाध्याय्याः पठनेन शब्दव्युत्पत्तिः वाक्यव्युत्पत्तिः च फलतः। शब्दव्युत्पत्त्यै मुख्यसिद्धयः षोढा गण्यन्ते, यथा --

(१) सुबन्तसिद्धिः -- रामः, कृष्णाय, अजः

(२) तिङन्तसिद्धिः -- भवति, अपठत्, स्मरतु

(३) कृदन्तसिद्धिः -- भवितुं, कृतं, पठितवान्, नीत्वा

(४) तद्धितान्तसिद्धिः -- भार्गवः, दाशरथिः, आत्रेयः

(५) समाससिद्धिः -- राजपुरुषः, रामकृष्णौ, चक्रपाणिः, ससिद्धिम्

(६) स्त्रीसिद्धिः -- अजा, रमा, पार्वती

वाक्यव्युत्पत्त्यै कारकप्रकरणं, विभक्तिप्रकरणं च स्तः। एकैकस्य अपि परिचयः अग्रे प्राप्यते।

## अधिकारकुञ्चिका

बहुत्र विवक्षानुसारं कश्चित् प्रत्ययः योजनीयः भवति। अग्रे ज्ञायते यत् प्रथमाविभक्ति-एकवचनान्तसूचकः कश्चित् सुँ-प्रत्ययः। अतः, राम + सुँ = रामः। अत्र सुँ इति कश्चित् प्रत्ययः। यस्मात् अनन्तरं प्रत्ययः योजितः भवति, तत् अङ्गम्। अतः राम अङ्गसंज्ञकः, सुँ प्रत्ययसंज्ञकः।



स्वैरं प्रत्ययं कुत्रापि योजयितुं न शक्यते। सर्वेऽपि प्रत्ययाः अष्टाध्याय्यां सावधानतया स्थापिताः पाणिनिना। ते सर्वेऽपि प्रत्ययाः कस्मिंश्चित् अधिकारे वर्त्तन्ते। "धातोः" इत्यस्मिन् अधिकारे, "प्रातिपदिकात्" इत्यस्मिन् अधिकारे वा कश्चित् प्रत्ययः स्यात्। यदि विवक्षानुसारं सः च प्रत्ययः अपेक्षितः, अङ्गस्य धातुसंज्ञा, प्रातिपदिकसंज्ञा वा कार्या। यावत् अङ्गस्य सा संज्ञा अकृता, तस्मिन् अधिकारे प्रवेष्टुम् अस्माकम् अर्हता नैव वर्त्तते, सूत्रं च प्रयोक्तं न शक्यम्। अङ्गस्य संज्ञां कृत्वा, लब्धकुञ्चिकाः वयं, अधिकारद्वारम् उद्घाट्य, विवक्षानुसारं तत्रत्यान् प्रत्ययान् अङ्गात् परं योजयितुम् अर्हामः।

## सुबन्तप्रकरणम् (ऋमन्तपदानाम्)

प्रथमं णकारान्तस्य सुगण्-शब्दस्य सिद्धिः पठ्यते। सुबन्तपदं नाम, यस्य पदस्य अन्ते कोऽपि सुप्प्रत्ययः विराजते। सुप्प्रत्ययाः एकविंशतिः (७ विभक्तयः x ३ वचनानि = २१ प्रत्ययाः)। ते च प्रत्ययाः "प्रातिपदिकात्" इत्यस्मिन् अधिकारे विराजन्ते। अतः सा च कुञ्चिका आदौ स्वीकार्या। सुगण् इत्यस्य प्रातिपदिकसंज्ञा भूत्वा, सुप्प्रत्ययेषु युक्ततमप्रत्ययादेशः। तदनन्तरं सः च प्रत्ययः इत्प्रकरणसूत्रैः परिष्क्रियते। अन्ते, पदसंज्ञा भूत्वा, प्रत्ययस्य सकारस्य विसर्गीकरणं स्यात्।

अधोनिर्दिष्टसूत्रक्रमः नैव केवलं कण्ठस्थीकरणीयः, प्रत्युत प्रयोजनं ज्ञात्वा सूत्राणां परस्परसम्बन्धः अवगन्तव्यः। शिक्षकाभावे प्रतिसूत्रं प्रथमावृत्तेः ज्ञातव्यम्। नाम -- अनुवृत्तिः, पदच्छेदः, पदपरिचयः, समासविग्रहवाक्यं, सूत्रार्थः च ज्ञातव्यं प्रथमावृत्तितः। ततः सूत्रप्रयोजनं स्वयम् एव आविर्भवति। सर्वत्र तथैव कार्यम्। शिक्षकस्य उपस्थितौ तु सः एव अपेक्षितांशान् बोधयेत्।

सुगण्-प्रातिपदिकस्य किं वर्त्तते प्रथमान्तं बहुवचनान्तं रूपम्? आदौ सुप्प्रत्ययेषु युक्ततमः प्रत्ययः चेतव्यः विवक्षानुसारम्। अष्टादशप्रत्ययानां वचनसंज्ञा, विभक्तिसंज्ञा च आदौ कार्या।

सुगण्	*प्रातिपदिकसंज्ञां प्राप्य, विवक्षानुसारं जस्प्रत्ययः*

१.२.४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् [27]

४.१.२ (ङ्याप्प्रातिपदिकात्) स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्-ङसिँभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् (प्रत्ययः परश्च)

१.४.१०२ सुँपः (त्रीणि त्रीणि एकवचनद्विवचनबहुवचनानि एकशः)

१.४.१०३ (सुँपः तिङः त्रीणि त्रीणि) विभक्तिश्च

सुगण् + जस्	*प्रत्ययस्य परिष्कारः इत्प्रकरणस्थसूत्रैः*

१.३.७ (उपदेशे प्रत्ययस्य आदिः) चुँटूँ (इत्)

१.३.९ (इत्) तस्य लोपः

१.१.५९ अदर्शनं लोपः (इति)

सुगण् + अस्	*सकारस्य रक्षणम् विभक्तिसंज्ञया*

१.३.३ (उपदेशे) हलन्त्यम् (इत्)

१.३.४ (उपदेशे हलन्त्यम् इत्) न विभक्तौ तुँस्माः

इदानीं सकारस्य स्थाने विसर्गादेशः। अत्र सोपानद्वयम्। प्रथमं रुँ इति आदेशः, पुनः रुँ इत्यस्य विसर्गादेशः। किमर्थं द्वे सोपाने? यतो हि, अग्रे पदयोः सन्धिः अपि कार्यः। कुत्रचित् विसर्गलोपः, कुत्रचित् रेफादेशः, कुत्रचित् ओकारादेशश्च। अग्रे वर्ण्यते।

सुगण् + अस्	*सकारस्य रुँत्वम्*

१.४.१४ सुँप्तिङन्तं पदम्

८.२.६६ (पदस्य) ससजुषो रुः

सगण् + अरुँ	*रुत्वपरिष्कारः इत्प्रकरणस्थसूत्रैः*

१.३.२ उपदेशेऽजनुनासिक इत्

१.३.९ (इत्) तस्य लोपः

[27] पदं योगपदं रूढिपदं वा। अत्र अव्युत्पन्नपक्षं दर्शितम्।



१.१.५९ अदर्शनं लोपः (इति)

सुगण् + अर्	*रेफस्य विसर्गत्वम्*

१.४.१०९ विरामोऽवसानम्

८.३.१५ (संहितायां पदस्य रः) खरवसानयोः विसर्जनीयः

सुगण् + अः = सुगणः

संहितायां खरवसानयोः इत्यनेन पदयोः सन्धिकार्यं सूचितम्। अवसाने परे विसर्गादेशः। तथैव खरि परेऽपि विसर्गादेशः।

एवमेव (उपरिष्ठपद्धत्या) प्रायेण सुगण्-शब्दस्य सर्वाणि अपि रूपाणि व्युत्पद्यन्ते। एकमेव रूपम् अवशिष्टं, तच्च "सुगण् + सुँ = सुगण्" इति। अत्र, एकं नूतनसूत्रं येन हलः अनन्तरं सुँ-प्रत्ययः लुप्यते (अतः विसर्गत्वं नास्ति)। न केवलं हलः परं, प्रत्युत केभ्यश्चित् स्त्रीलिङ्गप्रातिपदिकेभ्यः अचः परम् अपि। सुगण् + सुँ = सुगण्, रमा + सुँ = रमा, नदी + सुँ = नदी। अन्यत्र तु विसर्गः तिष्ठति। राम + सुँ = रामः, भक्ति + सुँ = भक्तिः।

१.२.४१ अपृक्त एकाल्प्रत्ययः

अपृक्तः नाम अमिश्रितः। यस्य प्रत्ययस्य एकः एव अल् (अक्षरम्) अवशिष्टः, (अपरैः अक्षरैः अमिश्रितः) तादृशः प्रत्ययः अपृक्तसंज्ञकः।

सुगण् + सुँ	*प्रत्ययपरिष्कारः*

सुगण् + स्	*हलः परं सुँ इत्यस्य परिष्कृतस्य अपृक्तस्य लोपः*

१.२.४१ अपृक्त एकाल्प्रत्ययः

६.१.६६ हल्ङ्याब्भ्यो दीर्घात् सुँतिस्यपृक्तं हल् (लोपः)

सुगण् = सुगण्

सुँ इत्यस्य परिष्कारात् परं सकारमात्रं तिष्ठति। हलः परं, दीर्घात् स्त्रीलिङ्गात् परं वा सुँ इत्यस्य अपृक्तस्य सकारः लुप्यते। तेन सुगण् इति रूपं सिद्ध्यति।

अभ्यासः 8

सुगण्-प्रातिपदिकस्य सर्वाणि अपि रूपाणि ससिद्धिं दर्शयत। यण्, ञम् इत्येतयोः प्रातिपदिकयोः अपि कानिचन सुबन्तरूपाणि ससिद्धिं दर्शयत। (यण् + सुँ = यण्, यण् + औ = यणौ इत्यादीनि रूपाणि)

## संज्ञा द्विधा

अष्टाध्याय्यां बह्व्यः संज्ञाः सन्ति। तासां सामान्यः लौकिकपरिचयः भवति एव। यथा "धातुः", "प्रातिपदिकं" वा व्यवहारे प्रयुज्यते। सः च लौकिकः अर्थः पाणिनिनाऽपि स्वीकृतः स्यात्। बहुत्र, न केवलं सः एव अर्थः। आवश्यकतानुसारं, विशिष्टार्थः अपि कल्पितः स्यात्, यः लौकिकक्षेत्रे नैव प्रयुज्येत। अतः धातुः इत्यस्य सामान्यसंज्ञा, विशिष्टसंज्ञा च भवति अष्टाध्याय्याम्। तथैव प्रातिपदिकादीनाम् अपि।

## सुबन्तप्रकरणम् (हलन्तपदानाम्)

सुगणः (सुगण् + जस्) इत्यस्य व्युत्पत्तौ, दृष्टम् अस्माभिः यत् समुदायः पदसंज्ञां प्राप्य, प्रत्ययस्य सकारस्य रुत्वविसर्गौ कृतौ इति। ते च सूत्रे "ससजुषोः रुः", "खरवसानयोर्विसर्जनीयः" च पदस्य अधिकारे स्तः। तथैव, तस्मिन् एव अधिकारे अन्यानि अपि सूत्राणि सन्ति यानि पदान्ते किञ्चित् कार्यं कुर्वन्ति।

वाच्-शब्दस्य किञ्चित् रूपं वाग्भ्याम् इति। वाच् + भ्याम् = वाग्भ्याम्। चकारेण गकारेण भवितव्यम्। कार्यम् इदं साधयितुं पदाधिकारे कानिचन सूत्राणि सन्ति। तैः सूत्रैः पदस्य अन्तस्थितस्य अक्षरस्य परिवर्तनं शक्यम्। तानि सूत्राणि उपयोक्तुं वाच् इति भागमात्रस्य अङ्गस्य कथञ्चित् पदसंज्ञा कार्या। एषा विशिष्टा अलौकिकी पदसंज्ञा

वाच् + भ्याम् — *वाच् इत्यस्य पदसंज्ञा*

१.१.४२ सुडनपुंसकस्य (सर्वनामस्थानम्)

१.४.१७ स्वादिष्वसर्वनामस्थाने (पदम्)



स्वादिषु नाम न केवलं सुप्प्रत्ययाः, प्रत्युत ततः आरभ्य बहूनां प्रत्ययानाम् आवलिः। असर्वनामस्थानेषु परेषु, पूर्वस्थितस्य अङ्गस्य पदसंज्ञा। सर्वनामस्थानं पुँल्लिङ्गस्य स्त्रीलिङ्गस्य अङ्गस्य सुट् (सु औ जस् अम् औट्)। तर्हि कदा अङ्गस्य पदसंज्ञा?

| लिङ्गम् | परे स्थिते | अङ्गस्य पदसंज्ञा |
|---|---|---|
| पुम् | शस् - सुप् | ✓ |
| स्त्री | शस् - सुप् | ✓ |
| नपुम् | सुँ - सुप् | ✓ |

इदानीं, पदस्य अधिकारे सूत्राणि प्रयोक्तुं शक्नुमः। तानि च सूत्राणि कीदृशानि भवेयुः? वाच् + भ्यां = वाग्भ्याम्। अतः, चकारस्य स्थाने गकारादेशः आवश्यकः। सर्वमपि उच्चारणस्य स्थानदृष्ट्या प्रयत्नदृष्ट्या च अवलोकनीयम्। वर्गीयव्यञ्जनानि सर्वाणि अपि स्पृष्टानि। अतः आभ्यन्तरप्रयत्नदृष्ट्या न किमपि परिवर्तनम्।

| अक्षरः | उच्चारणस्थानम् | यत्नम् (बाह्यम्) |
|---|---|---|
| चकारः | तालुः (चवर्गीयः) | व्यञ्जनेषु प्रथमः (चर्) |
| गकारः | कण्ठः (कवर्गीयः) | व्यञ्जनेषु तृतीयः (जश्) |

अतः प्रायेण द्वे सूत्रे आवश्यके स्याताम्। एकेन उच्चारणस्थानपरिवर्तनम्। अपरेण उच्चारणयत्नपरिवर्तनम्। क्रमं न जानीमः। तथाऽपि सूत्रम् ऊहितं इव।

वाच् + भ्याम् — *स्थानपरिवर्तनम्*

८.२.३० (पदस्य) चोः कुः (झलि अन्ते च)

१.१.४९ स्थानेऽन्तरतमः (स्थाने)

वाक् + भ्याम् — *प्रयत्नपरिवर्तनम्*

८.२.३९ (पदस्य) झलां जशोऽन्ते

१.१.४९ स्थानेऽन्तरतमः (स्थाने)

वाग् + भ्याम् = वाग्भ्याम्

यथा ऊहितम् भवद्भिः, तथैव सोपानद्वयम्। प्रथमं, चवर्गस्य स्थाने कवर्गादेशः येन उच्चारणस्य स्थानपरिवर्तनं जातम्। द्वितीयं, झल् इत्येतेषां स्थाने जश्-आदेशः येन उच्चारणस्य प्रयत्नपरिवर्तनं जातम्। किमर्थं झलां, न तु चराम् इति? पुनः किमर्थं झलि अन्ते च इति? यतः सूत्रस्य स्पष्टता, विश्वतोमुखता च अपेक्षिते। इमे सूत्रे बहुषु सन्दर्भेषु प्रयुक्ते भवतः। यतो हि झल् इत्यस्मिन् चर् अन्तर्हितः, अस्माकम् अपेक्षा तु पाणिनिना पूरिता एव।

पाणिनेः तन्त्रं किञ्चित् ज्ञात्वा, तस्य सूत्राणि ऊहितुं शक्नुमः इव ! अहो, वयमपि कुशाग्रबुद्धयः नवपाणिनयः ननु?

किमर्थं प्रक्रिया इयम् अनावश्यकम् आसीत् सुगण्-शब्दस्य व्युत्पत्तौ? सः शब्दः णकारान्तः। चवर्गे झलि च णकारः अनन्तर्हितः। अतः प्रथमं ञमन्तानां पदानां व्युत्पत्तिं प्रदर्श्य, झलन्तानां काचित् सिद्धिः दर्शिता।

वाच्-शब्दस्य सर्वाणि रूपाणि कानि?

| | | | |
|---|---|---|---|
| १ | वाग् / वाक् | वाचौ | वाचः |
| २ | वाचम् | वाचौ | वाचः |
| ३ | वाचा | वाग्भ्याम् | वाग्भिः |
| ४ | वाचे | वाग्भ्याम् | वाग्भ्यः |
| ५ | वाचः | वाग्भ्याम् | वाग्भ्यः |
| ६ | वाचः | वाचोः | वाचाम् |
| ७ | वाचि | वाचोः | वाक्षु |

सुँ-प्रत्ययान्तरूपं (१।१), सुप्-प्रत्ययान्तरूपं (७।३) च अग्रे अवलोक्येते। वाच् इति स्त्रीलिङ्गप्रातिपदिकम्। अतः औ, जस्, अम्, औट् च परे, सर्वनामस्थानं नास्ति। अतः तेषु प्रत्ययेषु परेषु, अङ्गस्य पदसंज्ञा नास्ति। यदि पदसंज्ञा न भवति, चकारस्य परिवर्तनम् अपि न भवति (यतो हि ते परिवर्तकसूत्रे पदाधिकारे वर्त्तेते)।



अन्यत्र, चकारेण गकारेण भवितव्यम् एव। किन्तु, कुत्रचित् तथा नास्ति। केभ्यः प्रत्ययेभ्यः पूर्वम् इयं स्थितिः? शस्, टा, ङे, ङसि, ङस्, ओस्, आम्, ङि च। कापि समानता किं वर्त्तते? परिष्कृतप्रत्ययाः के? अस्, आ, ए, अस्, अस्, ओस्, आम्, इ च। सर्वत्र आदौ अच् वर्त्तते। अतः प्रायेण अचि परे (परिष्कृते), पदसंज्ञा न स्यात्। अथवा पदस्य अधिकारे कोऽपि अपवादः स्यात्। पाणिनिना प्रथममार्गः अनुसृतः।

१.४.१७ स्वादिष्वसर्वनामस्थाने (पदम्)

१.४.१८ यचि भम् (स्वादिष्वसर्वनामस्थाने)

असर्वनामस्थाने, यचि परे, पदसंज्ञा नैव भवति, प्रत्युत भ-संज्ञा भवति। य् च अच् च यच्, तस्मिन् यचि। यतः पदसंज्ञा अप्राप्ता, तस्मिन् अधिकारे विराजमानानि सूत्राणि नैव प्रयोक्तव्यानि। अतः चकारः यथावत् तिष्ठति।

यथा "पदस्य" इति अधिकारसूत्रं वर्त्तते, तथैव "भस्य" इति अधिकारसूत्रान्तरम् अपि वर्त्तते। तस्मिन् कानिचन सूत्राणि अग्रे अवलोकयामः।

| भस्य | ६.४.१२९ | ६.४.१७५ |
|---|---|---|

संप्रति सुँ, सुप् प्रत्ययौ च विहाय, अन्यानि सर्वाणि रूपाणि सिद्धानि।

- सुट्प्रत्यये परे, पदसंज्ञा नास्ति। अतः अङ्गस्य चकारः।
- [28]शप्प्रत्यये परे, यदि हलि, पदसंज्ञा अस्ति। अतः अङ्गस्य चकारस्य गकारः।
- शप्प्रत्यये परे, यदि अचि, भसंज्ञा अस्ति। अतः अङ्गस्य चकारः।

इदानीं सुँप्रत्ययान्तरूपम्। अत्र, द्वे रूपे स्तः। वाच् + सुँ = वाग् / वाक् इति। अतः किञ्चित् रूपं प्राप्य, विकल्पेन अपररूपप्राप्तिः। वयं ककारादेशं, गकारादेशं च दृष्टवन्तः एव। तेन द्वयोः अपि रूपयोः प्राप्तिः। किन्तु वाक् इति स्थिते, पदसंज्ञकस्य विकल्पः नास्ति, ककारेण गकारेण

---

[28] पाणिनेः शप्, धातोः सामान्यविकरणप्रत्ययः। अस्मिन् प्रसङ्गे -- शस्, टा ◦ सुप् -- इति शप्

भवितव्यम्। नाम, वाग् इति भवति एव। अतः अत्रापि प्रथमं वाग् इति पूर्ववत् भूत्वा, पुनः कथञ्चित् वाक् इति विकल्पेन भवति।

किन्तु तानि सूत्राणि प्रयोक्तुं, वाच् इति अङ्गस्य पदसंज्ञा आवश्यकी। अङ्गमात्रस्य अत्र कथं पदसंज्ञा? यतो हि सुट् अस्ति, पदसंज्ञया नैव भवितव्यं, ननु? एवं सिद्ध्यति --

वाच् + सुँ — *प्रत्यय-परिष्कारः*

१.४.१४ सुँप्तिङन्तं पदम्

१.३.२ उपदेशेऽजनुनासिक इत्

वाच् + स्

६.१.६६ हल्ङ्याब्भ्यो दीर्घात् सुँतिस्यपृक्तं हल् (लोपः)

वाच्

हल्ङ्याब्भ्यो दीर्घात् परं सुँप्रत्ययस्य लोपः (सुगण् यथा)। अत्र, यद्यपि सुँ इत्यस्य सम्पूर्णस्य प्रत्ययस्य लोपः जातः, तथाऽपि सुँलक्षणेन पदसंज्ञा तिष्ठति एव। नाम, लोपे जाते अपि, निमित्तं "सुँ" तिष्ठति इव। अतः, पदस्य अधिकारे यानि सूत्राणि वर्त्तन्ते, तानि अपि प्रयोक्तव्यानि। ततः पूर्ववत् चकारस्य गकारः। तदनन्तरं विकल्पेन गकारस्य ककारः।

वाच् — *स्थानपरिवर्तनम् (सुँ-लोपेऽपि पदसंज्ञा)*

८.२.३० (पदस्य) चोः कुः (झलि अन्ते च)

वाक् — *प्रयत्नपरिवर्तनम्*

८.२.३९ (पदस्य) झलां जशोऽन्ते

वाग् — *गकारस्य ककारः विकल्पेन*

८.४.५५ (संहितायां झलां चर्) वा अवसाने

वाग् / वाक्



अतः अपेक्षिते रूपे सिद्धे। अवशिष्टः सुप्प्रत्ययान्तरूपम्। तच्च रूपं वाक्षु इति। वाक्षु नाम वाक् + षु। अत्र, नूतनकार्यद्वयम् (१) चकारस्य ककारः, (२) सकारस्य षकारः चेति।

चकारस्य ककारः इदानीम् एव कारितः, परन्तु विकल्पेन। अत्र विकल्पः नास्ति। "वा अवसाने" इत्यमात् पूर्वं यत् सूत्रं वर्त्तते, तत् प्रयोक्तव्यं, तेन चकारस्य नित्यककारः, खरि परे।

८.४.५४ (संहितायां झलां चर्) खरि च

अतः अवशिष्टम् इदम् -- सुप् इत्यस्य सकारस्य षकारः।

८.३.५९ (संहितायाम् इण्कोः) आदेशप्रत्यययोः (अपदान्तस्य सः मूर्धन्यः नुम्विसर्जनीयशर्व्यवायेऽपि)

अपदान्तस्य सकारस्य स्थाने मूर्धन्यादेशः (षकारादेशः) भवति, आदेशे परे, प्रत्यये परे वा। इण्-प्रत्याहारेण परणकारः ग्राह्यः। अतः इमानि रूपाणि -- अग्निषु, गुरुषु, पितृषु चेति। तथैव वाक्षु अपि।

## पूर्वत्रासिद्धम्

प्रश्नः उदेति -- एतयोः सूत्रयोः किं सूत्रं प्रथमं प्रयोक्तव्यम् इति। अष्टाध्याय्यां बहूनि सुत्राणि सन्ति। तानि कथं वा कार्यं कुर्वन्ति?

मुख्यतया सर्वाणि अपि सूत्राणि (१.१-८.१) गोष्ठ्यां संमुखे उपविश्य चर्चां कुर्वन्ति, कार्यं स्वीकुर्वन्ति च। सर्वेषां कार्यं -- ज्येष्ठानां बृहत्कार्यं, लघूनां अल्पकार्यम्। गणनिर्णये स्वीकृते, न किमपि परिवर्तनम्। परन्तु, सर्वकारवत् पुच्छं वर्त्तते (८.२-८.४)। अस्यां त्रिपद्यां सर्वाणि अपि सूत्राणि पङ्क्तौ उत्तरमुखानि सन्ति। न कोऽपि जानीयात् यत् पृष्ठे किञ्चित् अपरं सूत्रं वर्त्तते उत न। अपरस्य पूर्वस्थितस्य अभिमानम् अगणयित्वा, यदि शक्यं, स्वबलदर्शनाय रूपपरिवर्तनं करोति एकैकं सूत्रम्।

१.१-८.१ पर्यन्तम् अभिमानरहितं गणकार्यम्। ८.२ - ८.४ पर्यन्तम् अभिमानसहितं वैयक्तिककार्यम्।

अतः अस्माकं दृष्ट्या ज्ञातव्यं यत् --

- प्रथमं १.१ - ८.१ इत्यस्मिन् भागे सूत्राणि प्रयोक्तव्यानि
- अन्ते ८.२ - ८.४ पर्यन्तं प्रायेण क्रमेण एव सूत्राणि प्रयोक्तव्यानि

अस्माभिः कानिचन सूत्राणि प्रयुक्तानि, येषां त्रिपद्याम् अधिवासः। अतः प्रायेण अष्टाध्याय्याः एव क्रमेण तानि सूत्राणि प्रयोक्तव्यानि।

| | |
|---|---|
| ८.२.३० | (पदस्य) चोः कुः (झलि अन्ते च) |
| ८.२.३९ | (पदस्य) झलां जशोऽन्ते |
| ८.३.५९ | (संहितायाम् नुम्विसर्जनीयशर्व्यवायेऽपि इण्कोः) आदेशप्रत्यययोः (अपदान्तस्य सः मूर्धन्यः) |
| ८.४.५४ | (संहितायां झलां चर्) खरि च |

अतः वाक्षु इत्यस्य सिद्धौ, आदौ चकारस्य गकारः। द्वितीयं, प्रत्ययस्य सकारस्य षकारादेशः। अन्ते गकारस्य ककारः।

त्रिपद्याः कश्चित् प्रश्नः आविर्भवति -- रुत्वानन्तरं, कुतः प्रत्ययपरिष्कारादिकम्? रुत्वं त्रिपद्यां विहितं, इत्प्रकरणं न तथा -- इति। आदेशः वर्त्तते रुँ, न तु रु। उकारः अनुनासिकः। यदि परिष्कारं न कुर्मः, अनुनासिकत्वस्य प्रयोजनम् एव नास्ति, अतः अत्र पूर्वत्रासिद्धस्य अपवादः मन्तव्यः।

| | | |
|---|---|---|
| संहितायाम् | ६.१.७० | ६.१.१५१ |
| *तयोर्य्वावचि* संहितायाम् | ८.२.१०८ | ८.४.६७ |

पूर्वं, किमर्थम् अधिकारसूत्रेषु "संहितायाम्" इत्यनेन द्विवारं स्थितम् इति प्रश्नः आविरभवत्। इदानीं ज्ञातं खलु? एकत्र सामान्यसूत्रं, अपरत्र त्रिपदीसूत्रम्। कार्यशैली भिन्ना।



## सूत्रावलिः

| | |
|---|---|
| १.१.४२ | सुडनपुंसकस्य (सर्वनामस्थानम्) |
| १.१.४९ | स्थानेऽन्तरतमः (स्थाने) |
| १.२.४१ | अपृक्त एकाल्प्रत्ययः |
| १.४.१४ | सुँप्तिङन्तं पदम् |
| १.४.१७ | स्वादिषु असर्वनामस्थाने (पदम्) |
| १.४.१८ | यचि भम् (स्वादिष्वसर्वनामस्थाने) |
| १.४.१०२ | सुँपः (त्रीणि त्रीणि एकवचनद्विवचनबहुवचनानि एकशः) |
| १.४.१०३ | (सुँपः तिङः त्रीणि त्रीणि) विभक्तिश्च |
| १.४.१०९ | विरामो अवसानम् |
| ६.१.६६ | हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् (लोपः) |
| ८.२.३० | (पदस्य) चोः कुः (झलि अन्ते च) |
| ८.२.३९ | (पदस्य) झलां जशोऽन्ते |
| ८.२.६६ | (पदस्य) ससजुषो रुः |
| ८.३.१५ | (संहितायां पदस्य रः) खरवसानयोः विसर्जनीयः |
| ८.३.५९ | (संहितायाम् नुम्विसर्जनीयशर्व्यवायेऽपि इण्कोः) आदेशप्रत्यययोः (अपदान्तस्य सः मूर्धन्यः) |
| ८.४.५४ | (संहितायां झलां चर्) खरि च |
| ८.४.५५ | (संहितायां झलां चर्) वा अवसाने |

## अभ्यासः 9

एभ्यः प्रातिपदिकेभ्यः परं विभिन्नसुप्प्रत्ययान् (सुँ, सुप्, भ्याम्, जस्, टा, इत्यादीन्) योजयित्वा, सम्पूर्णसिद्धिं दर्शयत -- ऋत्विज्, वणिज्, सरट्, मरुत्, सम्पद्, सुप्, ककुभ्, समिध्, क्षुध्, सुयुध्, अनुष्टुभ्, त्रिष्टुभ्, अग्निमथ्, सुलिख, अर्धभाज्। सर्वाणि अपि प्रातिपदिकानि पुँल्लिङ्गप्रातिपदिकानि स्त्रीलिङ्गप्रातिपदिकानि वा।

# तिङन्तप्रकरणम् (पठ्धातुः)

१.४.१४ सुँप्तिङन्तं पदम्

पदानि सुबन्तानि[29] तिङन्तानि वा। सुबन्तपदानि नामपदानि, तिङन्तपदानि क्रियापदानि। सुप्प्रत्ययाः २१, तिङ्प्रत्ययाः १८ -- पुरुषत्रयं x वचनत्रयं x २ (आत्मनेपदित्वं, परस्मैपदित्वम्) च।

| पठति | पठतः | पठन्ति |
|---|---|---|
| पठसि | पठथः | पठथ |
| पठामि | पठावः | पठामः |

सुबन्तप्रकरणे प्रातिपदिकात् अङ्गात् परं विवक्षानुसारं सुप्प्रत्ययः चितः। तथैव तिङन्तप्रकरणे धातोः अनन्तरं तिङ्प्रत्ययः चेतव्यः इति कल्पना स्यात्। परन्तु, तिङन्तप्रकरणे दशलकाराः अपि सन्ति। अतः लकारचयनात् परं तिङ्प्रत्ययचयनम्।

४.१.२ (ङ्याप्प्रातिपदिकात्) स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्-ङसिँभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् (प्रत्ययः परश्च)

३.४.७८ (धातोः लस्य) तिप्तस्झिसिप्थस्थमिब्वस्मस्-तातांझथासाथांध्वमिड्वहिमहिङ् (प्रत्ययः परश्च)

सूत्रं स्वयमेव विवृणोति। तिङ्प्रत्ययविधायकसूत्रे, लस्य इत्यनेन स्थानी निर्दिष्टः। परन्तु, सुप्प्रत्ययविधायकसूत्रस्य न तथा कोऽपि स्थानी। अतः लकारादेशः, पुनः तिङ्प्रत्ययः।

पठँ *वर्त्तमानकालविवक्षा*

३.२.१२३ वर्तमाने (धातोः) लँट् (प्रत्ययः परश्च) [30]

[29] सुबन्तपदेषु अव्ययपदानि अपि अन्तर्हितानि।

[30] "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यस्मात् कर्त्तरि प्रयोगः विवक्षितः। अग्रे बोध्यते।



पठँ लट्

लकारं चित्वा, लकारस्य स्थाने तिङ्प्रत्ययादेशः। एषां तिङ्प्रत्ययानां पुरुषसंज्ञा वचनसंज्ञा च कार्या, याभ्यां विवक्षानुसारं तिङ्प्रत्ययेषु अन्यतमः चेतव्यः। यथा -- पठँ + लट् = पठँ + तिप्।

| वचनम् | परस्मैपदी | | | आत्मनेपदी | | |
|---|---|---|---|---|---|---|
| प्रथम° | तिप् | तस् | झि | त | आताम् | झ |
| मध्यम° | सिप् | थस् | थ | थास् | आथाम् | ध्वम् |
| उत्तम° | मिप् | वस् | मस् | इड् | वहि | महिङ् |

यदि लकारस्य स्थाने तिङ्प्रत्ययादेशः, किमर्थं लकारादेशः आवश्यकः आसीत्? किमर्थं सर्वेषां लकाराणाम् आदेशसाम्यम्? यद्यपि लकारः अन्तर्धत्ते (तस्य स्थाने तिङ्प्रत्ययादेशः), अग्रे लकारानुसारम् अन्यानि कार्याणि प्रवर्तिष्यन्ते। आगमः स्यात्, अथवा तिङ्प्रत्ययस्य स्थाने आदेशान्तरं स्यात् लकारानुसारम्। अस्यां सिद्धौ एतादृशम् अनावश्यकं भवति। इदानीं प्रत्ययार्थबोधः।

३.४.७८ (धातोः लस्य) तिप्तस्झिसिप्थस्थमिब्वस्मस्-तातांझथासाथांध्वमिड्वहिमहिङ् (प्रत्ययः परश्च)

१.४.१०० तिङः त्रीणि त्रीणि प्रथममध्यमोत्तमाः

१.४.१०१ (तिङः त्रीणि त्रीणि) तानि एकवचनद्विवचनबहुवचनानि एकशः

१.४.१०३ (सुँपः तिङः त्रीणि त्रीणि) विभक्तिश्च

एभ्यः सूत्रेभ्यः तिङ्प्रत्ययानां पुरुषसंज्ञा, वचनसंज्ञा च। किमर्थं विभक्तिसंज्ञा? अनया विशिष्टसंज्ञया "न विभक्तौ तुँस्माः" इति सूत्रं प्रयोक्तव्यम्। अतः सकाररक्षणं तिङ्प्रकरणेऽपि विहितम्। पूर्वार्धः एव परस्मैपदिबोधकाः ननु?

१.४.९८ लः परस्मैपदम्

१.४.९९ तङानौ आत्मनेपदम्

सर्वे प्रत्ययाः परस्मैपदिनः, परन्तु तङ्प्रत्ययाः आत्मनेदपिनः। अतः अवशिष्टाः पूर्वार्धप्रत्ययाः परस्मैपदिनः, उत्तरार्धप्रत्ययाः आत्मनेपदिनः[31]। आनः नाम शानच्प्रत्ययादीनां ग्रहणं (पठ्यमानः, कुर्वाणः, क्रियमाणः)।

इदानीं पठति इति रूपं कल्पयामः

पठँ *वर्त्तमानकालविवक्षा*

१.३.१ भूवादयो धातवः

१.३.२ उपदेशेऽजनुनासिक इत्

१.३.९ (इत्) तस्य लोपः

३.२.१२३ वर्तमाने (धातोः) लँट् (प्रत्ययः परश्च)

पठ् लँट्

१.३.३ (उपदेशे) हलन्त्यम् (इत्)

१.३.२ उपदेशेऽजनुनासिक इत्

१.३.९ (इत्) तस्य लोपः

पठ् ल् *विवक्षानुसारं कर्त्तरि प्रयोगे पूर्ववत् परस्मैपदिप्रत्ययः चितः।*

पठ् तिप्

क्रियापदव्युत्पत्तौ भागत्रयम् -- (१) धातुः (२) विकरणप्रत्ययः (३) तिङ्प्रत्ययः चेति। धातूनां दशगणाः, प्रत्येकं तस्य विकरणप्रत्ययः च। कर्त्तरि प्रयोगे सामान्यविकरणप्रत्ययः शप् इति। अग्रे इतोऽपि बोध्यते। धातोः अनन्तरं, तिङ्प्रत्ययपूर्वं विकरणप्रत्ययादेशः।

पठ् तिप् *कर्त्तरि प्रयोगे सामान्यविकरणप्रत्ययः शप् इति*

३.४.११३ (धातोः) तिङ्शित् सार्वधातुकम् (प्रत्ययः परश्च) [32]

[31] अत्र धातोः परस्मैपदित्वम् आत्मनेपदित्वं च उपेक्षितम्

[32] अग्रिमसूत्रम् (आर्धधातुकबोध्यम्) अपि परिचयनीयम्।



३.१.६८ कर्तरि (धातोः) शप् (प्रत्ययः परश्च सार्वधातुके)

पठ् शप् तिप् *प्रत्ययपरिष्कारः*

१.३.३ (उपदेशे) हलन्त्यम् (इत्)

१.३.९ (इत्) तस्य लोपः

पठ् अ ति = पठति

पठ् + तस् = पठतः इत्यत्र इयमेव प्रक्रिया। सुबन्तवत् पदसंज्ञया सकारस्य रुत्वविसर्गौ। अतः एव पूर्वं विशिष्टविभक्तिसंज्ञा प्राप्ता। नो चेत्, तस् इत्यस्य सकारलोपः कार्यः भवति, "हलन्त्यम्" इत्यस्मात्। यतः तिङः अपि विभक्तिसंज्ञकाः, "न विभक्तौ तुस्माः" प्रयुज्यते, सकारः रक्षितश्च।

यथा तिप्, तथा सिप्। यथा तस्, तथा थस्, थ च। अवशिष्टं सन्ति झि, मिप्, वस्, मस् च।

१.३.८ (उपदेशे प्रत्ययस्य आदिः) लशक्वतद्धिते (इत्)

पठ् + लँट् इति स्थिते, लशक्वतद्धिते इत्यनेन किमर्थं लकारस्यापि इत्त्वं भूत्वा, तस्य लोपः न स्यात्? यदि एवं क्रियते, "लस्य" इत्यस्य सूत्रस्य प्रयोजनम् एव नास्ति। अतः, अत्र अपवादत्वेन गण्यते। "उच्चारणसामर्थ्यात् लस्य न इत्त्वम्" इति कौमुदीकारः। पाणिनेः सर्ववचनस्य प्रयोजनं भवति एव इति धिया।[33]

## अङ्गम्

पूर्वं सूचितं यत् अङ्गात् परं प्रत्ययः, प्रत्ययात् पूर्वम् अङ्गं च इति। यथा, राम + सुँ इति स्थिते राम अङ्गसंज्ञकः, सुँ प्रत्ययसंज्ञकः। इतोऽपि कश्चित् अंशः -- यदि अङ्गप्रत्यययोः मध्ये कश्चित् आदेशः भवति, सोऽपि प्रत्ययदृष्ट्या अङ्गान्ते ग्रथितव्यः। एषा अङ्गस्य विशिष्टसंज्ञा।

[33] ल् इति अपृक्तप्रत्ययः, अपृक्तस्य एव आदिग्रहणम्। अतः नैव प्रयोज्यम् इति प्रौढसमाधानम्।

पठ् + तिप् इति स्थिते, पठ् इति अङ्गं, तिप् इति प्रत्ययः। पठ् + शप् + तिप् इत्यत्र मार्गद्वयम्। तिप् इत्यस्य प्रत्ययस्य दृष्ट्या, पठ् + शप् इति अङ्गम्। शप् इत्यस्य प्रत्ययस्य दृष्ट्या, पठ् इति अङ्गम्। युगपत् पक्षद्वयम् अपि साधु। नाम { पठ् } इत्यस्य अङ्गकार्यं, { पठ् + शप् } इत्यस्य अङ्गकार्यं च भवितुम् अर्हतः।

पठ् + अ + झि *झि-प्रत्यये परे (१।३)*

७.१.३ (अङ्गस्य प्रत्ययस्य आदेः) झोऽन्तः [34]

पठ् + अ + अन्त् + इ

अस्मात् पठान्ति इति रूपं सिद्ध्यति। कथमपि अ + अ = अ इत्यनेन भवितव्यं ननु, अपेक्षितरूपकल्पार्थम्। कथं कुर्मः?

६.१.९४ (संहितायाम् अपदान्तात्) अतो (पूर्वपरयोः एकः पररूपम्) गुणे

अहो, सूत्रेऽस्मिन् सर्वाणि अपि पदानि नूतनानि इव। यतो हि संहिताधिकारः अपरिचितः।

## संहिता

पठ्यमानं सूत्रम् अवगन्तुं, संहिताप्रकरणस्य किञ्चित् ज्ञानम् आवश्यकम्। संहिता नाम सन्धिः। सः च द्वयोः अत्यन्तसमीपयोः अक्षरयोः परिणामः। तौ च द्वौ अक्षरौ पूर्वापरौ। आदेशः कीदृशः स्यात्? सन्धिः त्रिधा -- (१) पूर्वस्य स्थाने आदेशः (२) परस्य स्थाने आदेशः (३) पूर्वपरयोः स्थाने एकः एव आदेशः वा। प्रत्येकं कथं बोध्यते?

(१) पूर्वस्य स्थाने आदेशः -- पूर्वाक्षरं षष्ठीविभक्त्यन्तं, पराक्षरं सप्तमीविभक्त्यन्तम्
(२) परस्य स्थाने आदेशः -- पराक्षरं षष्ठीविभक्त्यन्तं, पूर्वाक्षरं पञ्चमीविभक्त्यन्तम्
(३) पूर्वपर्रयोः -- नूतनतन्त्रं आवश्यकम्। यतो हि, यदि पूर्वपराक्षरौ द्वौ अपि षष्ठीविभक्त्यन्तौ, अनयोः पौर्वापर्यं नैव रक्षितम्। अतः नूतनाधिकारसूत्रं, यस्मिन् अधिकारे पञ्चम्यन्तं सप्तम्यन्तं च स्थानिनौ भवतः, विभक्त्या यथावत् पौर्वापर्यं सूचीतं च।

[34] अत्र तु अनुवृत्तिवशात् ज्ञायते यत् पदस्य इत्यस्य अवयवषष्ठी (सम्बन्धषष्ठी) इति



| एकः पूर्वपरयोः | ६.१.८१ | ६.१.१०७ |
|---|---|---|

पूर्वपरयोः पञ्चम्यन्त-सप्तम्यन्तयोः एकः एव आदेशः अस्मिन् अधिकारे इत्यर्थः। सन्धिः पुनः त्रिधा --

(१) पदान्तसन्धिः -- पदान्त-पदारम्भयोः एव अक्षरयोः प्रयोगः
(२) अपदान्तसन्धिः -- पदमध्ये एव प्रयोगः
(३) सामान्यसन्धिः -- उभयत्र अपि प्रयोगः

पूर्वपरयोः अधिकारे आदेशः त्रिधा --

(१) स्पष्टतया निर्दिष्टम् -- सामान्यादेशः। आदेशाक्षरम् उक्तम्, आदेशप्रत्याहारः उक्तः वा
(२) पूर्वरूपम् -- पूर्वापरयोः अक्षरयोः पूर्वाक्षरं तिष्ठति
(३) पररूपं -- पूर्वापरयोः अक्षरयोः पराक्षरं तिष्ठति

## विकरणप्रत्ययस्य ह्रस्वदीर्घौ

इदानीं पठ्यामानं सूत्रम् अवगन्तुं शक्यते, येन अपदान्ते, अ + अ = अ।

१.१.२ अदेङ् गुणः

६.१.९४ (संहितायाम् अपदान्तात्) अतो (पूर्वपरयोः एकः पररूपम्) गुणे

गुणे (अ, ए, ओ) अकारः अन्यतमः। अकार-गुणयोः पूर्वापरयोः अपदान्तसंहितायाम् एकः एव पररूपादेशः। अतः, अ (पूर्वं) + अ (परं, गुणः) = अ (परम्)। पठ + अन्ति इति स्थिते, पठ इतस्य पदसंज्ञा नास्ति, अतः अपदान्तसंहिता कार्या। एवं, झि इत्यत्र दीर्घाकारस्य स्थाने ह्रस्वः अकारः साधितः।

इदानीं मिप् वस् मस् इत्यत्र विपरीतम्। "पठ् + अ + मि" इति स्थिते, ह्रस्व-विकरणप्रत्ययस्य अकारस्य स्थाने दीर्घः आकारादेशः कार्यः। "पठ + मि" इत्यस्मात् पठामि इति रूपं कल्पनीयम्। एतदपि अङ्गकार्यम्।

३.४.११३ (धातोः) तिङ्शित् सार्वधातुकम् (प्रत्ययः परश्च)

७.३.१०१ (अङ्गस्य) अतो दीर्घो यञि (सार्वधातुके)

सार्वधातुके परे, तच्च सार्वधातुकं यञादि (यञि वकारः मकारः च अन्तर्हितौ), अकारान्तस्य अङ्गस्य दीर्घीकरणम्। पठ + मि = पठा + मि = पठामि।

### अभ्यासः 10

एतेषां धातूनां विविधतिङन्तरूपाणि कल्पयत -- खादृँ भक्षणे, बुक्कँ भषणे, अर्चँ पूजानाम्, त्जयँ हानौ।

### इकः गुणः

अग्रे वर्ण्यते यत् इकां गुणः कुत्रचित् विहितः भवति इति। यदा विहितः, समीपतमगुणः चेतव्यः। उच्चारणदृष्ट्या, प्रथमं स्थानं पर्यालोकनीयं, अनन्तरं प्रयत्नः।

| अक्षरम् | स्थानम् |
|---|---|
| इ, ई | तालुः |
| उ, ऊ | ओष्टौ |
| ऋ, ॠ | मूर्धनी |
| ऌ | दन्तः |
| अ | कण्ठः |
| ए | कण्ठतालू |
| ओ | कण्ठोष्ठौ |

गुणः नाम अकारः, एकारः, ओकारः वा। स्थानसामीप्यदृष्ट्या, इकारस्य गुणः एकारः। उकारस्य गुणः ओकारः। ऋकारस्य का स्थितिः? गुणानां मुर्धनीस्थानं नैव दृश्यते।



किञ्चित् परिभाषा सूत्रं वर्त्तते, यस्य फलितार्थः अयं, यत् यदा ऋकारस्य अकारादेशः, सः आदेशः रपरः भवति इति। नाम, ऋकारदृष्ट्या गुणादेशाः अर्, ए, ओ वा स्युः। रेफस्य स्थानं तु मूर्धनी। अतः, ऋकारस्य गुणः वर्त्तते अर् इति। तथैव ऌकारस्य गुणः वर्त्तते अल् इति। समस्या यदि अवशिष्टा, न कोऽपि क्लेशः, सूत्रम् अग्रे दर्श्यते, इदानीं फलितार्थः ज्ञेयः।

| अक्षरम् | गुणः |
|---|---|
| इ, ई | ए |
| उ, ऊ | ओ |
| ऋ, ॠ | अर् |
| ऌ | अल् |

## गुणः, गुणनिषेधश्च

धातवः गणशः दशधा। क्रियापदानां प्रयोगानुसारं दशगणाः कल्पिताः। उदाहरणार्थं, शुच्-धातोः रूपं शोचति, प्रत्युत त्रुट्-धातोः रूपं त्रुटति। कुत्रचित् उकारस्य गुणः, अपरत्र न तथा। क्रियापदव्युत्पत्तौ एते अंशाः स्मर्तव्याः -- प्रतिगणं तस्य विकरणप्रत्ययः भिन्नः। कस्यचित् गणस्य अङ्गस्य गुणः भवति, अन्यत्र न तथा। कुत्र गुणः विहितः?

१.१.३ इको गुणवृद्धी (गुणः वृद्धिः)

इकः स्थाने गुणः विहितः। इक् नाम इ, ई, उ, ऊ, ऋ, ॠ, ऌ। अतः, सामान्यतया, हलः स्थाने गुणः न भवति, केषुचन एव अचः स्थाने च गुणः विहितश्च।

३.४.११३ (धातोः) तिङ्शित् सार्वधातुकम् (प्रत्ययः परश्च)

३.४.११४ (धातोः) आर्धधातुकं शेषः (प्रत्ययः परश्च)

७.३.८४ (अङ्गस्य गुणः) सार्वधातुकार्धधातुकयोः

यतो हि धातोः अधिकारे सर्वं सार्वधातुकम्, आर्धधातुकं वा, सर्वत्र अङ्गस्य अन्तिमाक्षरस्य गुणः विहितः इव। परन्तु कुत्रचित् धातोः मध्यस्थितस्य अचः स्थाने गुणः दृश्यते। कुतः? मध्यस्थिताक्षरं उपधा स्यात्। उपधा नाम, अन्तिमाक्षरस्य प्राक् यदक्षरं वर्त्तते, न तु यत्किमपि अक्षरम्।

१.१.६४ अलोऽन्त्यात् पूर्व उपधा [35]

७.३.८६ (अङ्गस्य) पुगन्तलघूपधस्य च (गुणः सार्वधातुकार्धधातुकयोः)

अतः लघूपधस्य [36] गुणः अपि भवति। पुगन्तस्य अन्यत्र कार्यम् -- अत्र उपेक्ष्यम्।

अनया प्रक्रियया, सर्वेषां गणानाम् अङ्गानां गुणः विहितः इति भाति। तर्हि कुतः त्रुटति इत्यस्य व्युत्पत्तिः, यत्र गुणः न दृश्यते? गुणनिषेधः कुत्रचित् किं विहितः?

१.१.५ क्क्ङिति च (इको न गुणवृद्धी)

गकार-ककार- ङकाराणां इत्संज्ञकानां निमित्ते सति, गुणः न भवति। परन्तु, न क्वापि एते क्क्ङाः दृश्यन्ते परस्मैपदिप्रत्ययेषु, विकरणप्रत्ययेषु वा। तर्हि कुतश्चित् अतिदेशः किम् वर्तते?

१.२.४ सार्वधातुकमपित् (ङित्)

नाम, यत् सार्वधातुकं पित्-रहितम् अस्ति, तत् ङिद्वत् भवति। एषः एव अतिदेशः। तिप्, तस्, झि इति केचन प्रत्ययाः। तिप् इत्यस्मिन् इत्संज्ञकः पकारः वर्त्तते, अतः तिप् ङित् नास्ति। तस्, झि इत्यनयोः पित् न वर्त्तते, अतः एतौ ङितौ। ङिन्निमित्ते गुणनिषेधश्च विहितः। एवमेव शप् अपि पित् अस्ति, अतः ङिदतिदेशः नास्ति। केषाञ्चन प्रत्ययानाम् उदाहारः अधः। एषु केचन अपरिचिताः स्युः --

| प्रत्ययः | सार्वधातुकत्वम् | पित्त्वम् | ङित्त्वम् |
|---|---|---|---|
| तिप् | ✓ | ✓ | × |
| तस् | ✓ | × | ✓ |
| झि | ✓ | × | ✓ |
| सिप् | ✓ | ✓ | × |
| थस् | ✓ | × | ✓ |
| शप् | ✓ | ✓ | × |
| उ | × | -- | × |

[35] सावधानं -- उपधा अच् वा हल् वा स्यात्। अतः "इको गुणवृद्धी" अपि स्मर्तव्यम्

[36] लौकिकलघुसंज्ञा अत्र पर्याप्ता। उपधायाः परं संयोगः न भवति।



# क्रियापदानां व्युत्पत्तौ गुणः

७.३.८४ (अङ्गस्य गुणः) सार्वधातुकार्धधातुकयोः

क्रियापदानां व्युत्पत्तौ त्रयः भागाः वर्त्तन्ते -- (१) धातुः (२) विकरणप्रत्ययः (३) तिप्प्रत्ययः। यथा -- पठ् + शप् + तिप्। पूर्वं विवृतं यत् { पठ् + शप् } अङ्गं तिप्प्रत्ययदृष्ट्या, { पठ् } अङ्गं शप्प्रत्ययदृष्ट्या। अतः, क्रियापदव्युत्पत्तौ विकरणप्रत्ययान्तस्य अङ्गस्य गुणः स्यात्, पुनः धात्वन्तस्य अङ्गस्य अपि गुणः स्यात्। अंशोऽयं अवधेयः।

## भ्वादिगणः

| भवति | भवतः | भवन्ति |
|---|---|---|
| भवसि | भवथः | भवथ |
| भवामि | भवावः | भवामः |

- परिष्कृतशप्प्रत्ययः अ-कारः। इकि न अन्तर्हितः। अतः तस्य गुणः अकार्यः।
- शप् इति प्रत्ययः पित्, अतः ङिदतिदेशः नास्ति। तस्मात् अङ्गस्य धातोः गुणः निषिद्धः नास्ति। यदि धातुः इगन्तः, उपधा लघु इक् वा, गुणः कार्यः।

द्रु + शप् + तिप्

१.३.३ (उपदेशे) हलन्त्यम् (इत्)

१.३.८ (उपदेशे प्रत्ययस्य आदिः) लशक्वतद्धिते (इत्)

१.३.९ (इत्) तस्य लोपः

द्रु + अ + ति

३.४.११३ (धातोः) तिङ्शित् सार्वधातुकम् (प्रत्ययः परश्च)

७.३.८४ (अङ्गस्य गुणः) सार्वधातुकार्धधातुकयोः

१.१.३ इको गुणवृद्धी (गुणः वृद्धिः)

द्रो + अ + ति

६.१.७५ (संहितायाम्) एचोऽयवायावः (अचि)

द्रव् + अ + ति = द्रवति

### अभ्यासः 11

एतेषां धातूनां विविधतिङन्तरूपाणि कल्पयत -- क्षि क्षये, जि जये, क्रुशँ आह्वाने रोदने च, ग्लै म्लै हर्षक्षये, सृ गतौ, स्रु गतौ, द्रु गतौ, तॄ प्लवनतरणयोः, त्यजँ हानौ, डुपचष् पाके, डुवपँ बीजसन्ताने छेदने च।

### तुदादिगणः

| | | |
|---|---|---|
| तुदति | तुदतः | तुदन्ति |
| तुदसि | तुदथः | तुदथ |
| तुदामि | तुदावः | तुदामः |

३.१.७७ (कर्तरि) तुदादिभ्यः (धातोः) शः (प्रत्ययः परश्च सार्वधातुके)

तुदादिगणे श इति विकरणप्रत्ययः। अयं विकरणप्रत्ययः अपित्, अतः ङित्। तस्मात् अङ्गस्य धातोः गुणनिषेधः।

तुद् + श + तिप्

१.३.३ (उपदेशे) हलन्त्यम् (इत्)

१.३.८ (उपदेशे प्रत्ययस्य आदिः) लशक्वतद्धिते (इत्)

१.३.९ (इत्) तस्य लोपः



तुद् + अ + ति

१.२.४ सार्वधातुकमपित् (ङित्)

१.१.५ क्क्ङिति च (इको न गुणवृद्धी)

तुद् + अ + ति = तुदति

### अभ्यासः 12

एतेषां धातूनां विविधतिङन्तरूपाणि कल्पयत -- क्षिपँ प्रेरणे, कृषँ विलेखने, मिलँ सङ्गमे, स्फुटँ विकसने, त्रुटँ छेदने, स्फुरँ स्फुरणे, सृजँ विसर्गे, लिखँ अक्षरविन्यासे।

### दिवादिगणः

| | | |
|---|---|---|
| कुप्यति | कुप्यतः | कुप्यन्ति |
| कुप्यसि | कुप्यथः | कुप्यथ |
| कुप्यामि | कुप्यावः | कुप्यामः |

३.१.६९ (कर्तरि) दिवादिभ्यः (धातोः) श्यन् (प्रत्ययः परश्च सार्वधातुके)

दिवादिगणस्य विकरणप्रत्ययः श्यन्, यस्य परिष्कृतरूपं य इति। इगभावात्, विकरणप्रत्ययस्य गुणाभावः। सः च प्रत्ययः शित्, सार्वधातुकं, अपित्, ङित्। तस्मात् अङ्गस्य धातोः गुणः निषिद्धः। ततः रूपाणि यथा -- कुप्यति, क्रुध्यति इत्यादीनि।

### अभ्यासः 13

एतेषां धातूनां विविधतिङन्तरूपाणि कल्पयत -- शुषँ शोषणे, तुषँ प्रीतौ, क्रुधँ क्रोधे, द्रुहँ जिघांसायाम्, कृशँ तनूकरणे, कुपँ क्रोधे, गुपँ व्याकुलत्वे।

### स्वादिगणः

| | | |
|---|---|---|
| चिनोति | चिनुतः | (चिन्वन्ति) |
| चिनोषि | चिनुथः | चिनुथ |
| चिनोमि | (चिनुवः) | (चिनुमः) |

३.१.७३ (कर्तरि) स्वादिभ्यः (धातोः) श्नुः (प्रत्ययः परश्च सार्वधातुके)

[37] स्वादिगणस्य विकरणप्रत्ययः श्नु, यस्य परिष्कृतरूपं नु इति। इग्भावात्, परस्य तिप्प्रत्ययस्य सार्वधातुकस्य, पिदभावात् विकरणप्रत्ययस्य गुणः भवति। तिप्प्रत्ययः अपित् चेत्, ङित् भवति, येन अङ्गस्य { धातोः + नु } इत्यस्य अन्तस्य गुणाभावः। ततः रूपाणि यथा -- चिनोति, चिनुतः इत्यादीनि॥ नु इति सार्वधातुकम्, अपित्, ङित्, येन अङ्गस्य धातोः गुणनिषेधः। पुनः कानिचन रूपाणि -- चिनोति, चिनुतः, शक्नोति, शक्नुतः।

## तनादिगणः

| तनोति | तनुतः | तन्वन्ति |
|---|---|---|
| तनोसि | तनुथः | तनुथ |
| तनोमि | | |

३.१.७९ (कर्तरि) तनादिकृञ्भ्यः (धातोः) उः (प्रत्ययः परश्च सार्वधातुके)

उ इति परिष्कृतः विकरणप्रत्ययः। सः इग्वान्, अतः गुणः शक्यः पिति परे (गुणनिषेधनिमित्ताभावे)। उ इति आर्धधातुकं, यस्य ङिदतिदेशः अशक्यः, अतः अङ्गस्य धातोः गुणः कार्यः। रूपाणि यथा -- तनोति, तनुतः, सनोति, सनुतः इत्यादीनि।

## अदादिगणः

| अत्ति | अत्तः | अदन्ति |
|---|---|---|
| अद्सि | अत्थः | अत्थ |
| अद्मि | अद्वः | अद्मः |

१.१.६० प्रत्ययस्य (अदर्शनं) लुक्श्लुलुपः

२.४.७२ अदिप्रभृतिभ्यः शपः (लुक्)

---

[37] झि, वस्, मस् -- अत्र विशिष्टकार्यं वर्त्तते, यदत्र उपेक्षितम्।



एनाभ्यां शप् अदर्शनं गच्छति। विकरणप्रत्ययाभावात्, धातुः एव अङ्गं, तिप्प्रत्ययः एव प्रत्ययः। पिति सार्वधातुके परे, अङ्गस्य धातोः गुणः। अपित् चेत्, ङित्, येन अङ्गस्य धातोः गुणनिषेधः। ततः साक्षात् धातुः प्रत्ययः इत्यनयोः संहिता, येन संहितासूत्रम् अपि विहितं स्यात्।

८.४.५४ (संहितायां झलां चर्) खरि च

इदानीम् आसिद्धिम् अवलोकयामः।

अद् + शप् + तिप्

२.४.७२ अदिप्रभृतिभ्यः शपः (लुक्)

अद् + तिप्

१.३.३ (उपदेशे) हलन्त्यम् (इत्)

१.३.९ (इत्) तस्य लोपः

अद् + ति

८.४.५४ (संहितायां झलां चर्) खरि च

अत् + ति = अत्ति

एवम् एव रूपाणि भवन्ति -- अत्ति, अत्तः, अदन्ति। अवशिष्टरूपाणि सर्वाणि अपि कल्पयितुं शक्यते।

## अवशिष्टगणाः

केषाञ्चन गणानां व्युत्पत्तिः न दर्शिता, यतो हि नैकानि अन्यानि नूतनानि सूत्राणि परचाययानि। ते च गणाः -- जुहोत्यादिगणः, क्र्यादिगणः, रुधादिगणश्च। चुरादिगणः अग्रे उदाह्रियते।

## धात्वधिकारः

३.१.२२ धातोः एकाचो हलादेः क्रियासमभिहारे यङ्

३.१.९१ धातोः

प्रथमसूत्रात् धातोः इत्यस्य अनुवृत्तिः ३.१.९० पर्यन्तं भवति। तर्हि, किमर्थं पुनः धातोः इत्यस्य अधिकारः?

३.१.९२ तत्र उपपदं सप्तमीस्थम्

अतः, धातोः अधिकारे एव उपपदं भवति, न तु प्रथमसूत्रस्य धातोः इत्यस्य अनुवृत्तौ। तथैव "कृदतिङ्" अपि अस्मिन् अधिकारे एव बलवान्। अतः शपादीनां विकरणप्रत्ययानां कृत्-संज्ञा नास्ति। अन्यत् -- "तत्र" इत्यस्य अनुवृत्तिः अपि वर्त्तते इति ज्ञातव्यम्।

## सूत्रावलिः

| | |
|---|---|
| १.१.२ | अदेङ् गुणः |
| १.१.३ | इको गुणवृद्धी (गुणः वृद्धिः) |
| १.१.५ | क्क्ङिति च (इको न गुणवृद्धी) |
| १.१.६० | प्रत्ययस्य (अदर्शनं) लुक्श्लुलुपः |
| १.१.६४ | अलोऽन्त्यात् पूर्व उपधा |
| १.२.४ | सार्वधातुकमपित् (ङित्) |
| १.३.१ | भूवादयो धातवः |
| १.४.१० | ह्रस्वं लघु |
| १.४.११ | (ह्रस्वं) संयोगे गुरु |
| १.४.१२ | दीर्घं च (गुरु) |
| १.४.१३ | यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् |
| १.४.९८ | लः परस्मैपदम् |
| १.४.९९ | तङानौ आत्मनेपदम् |
| १.४.१०० | तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः |
| १.४.१०१ | (तिङः त्रीणि त्रीणि) तानि एकवचनद्विवचनबहुवचनानि एकशः |
| १.४.१०३ | (सुँपः तिङः त्रीणि त्रीणि) विभक्तिश्च |
| २.४.७२ | अदिप्रभृतिभ्यः शपः (लुक्) |
| ३.१.६८ | कर्तरि (धातोः) शप् (प्रत्ययः परश्च सार्वधातुके) |
| ३.१.६९ | (कर्तरि) दिवादिभ्यः (धातोः) श्यन् (प्रत्ययः परश्च सार्वधातुके) |
| ३.१.७३ | (कर्तरि) स्वादिभ्यः (धातोः) श्नुः (प्रत्ययः परश्च सार्वधातुके) |
| ३.१.७७ | (कर्तरि) तुदादिभ्यः (धातोः) शः (प्रत्ययः परश्च सार्वधातुके) |
| ३.४.७८ | (धातोः लस्य) तिप्तस्झिसिप्थस्थमिब्वस्मस्-तातांझथासाथांध्वमिड्वहिमहिङ् (प्रत्ययः परश्च) |
| ३.१.७९ | (कर्तरि) तनादिकृञ्भ्यः (धातोः) उः (प्रत्ययः परश्च सार्वधातुके) |
| ३.४.११३ | (धातोः) तिङ्शित् सार्वधातुकम् (प्रत्ययः परश्च) |
| ६.१.७५ | (संहितायाम्) एचोऽयवायावः (अचि) |
| ६.१.९४ | (संहितायाम् अपदान्तात्) अतो (पूर्वपरयोः एकः पररूपम्) गुणे |
| ७.१.३ | (अङ्गस्य प्रत्ययस्य आदेः) झोऽन्तः |
| ७.३.८४ | (अङ्गस्य गुणः) सार्वधातुकार्धधातुकयोः |
| ७.३.८६ | (अङ्गस्य) पुगन्तलघूपधस्य च (गुणः सार्वधातुकार्धधातुकयोः) |
| ७.३.१०१ | (अङ्गस्य) अतो दीर्घो यञि (सार्वधातुके) |



# कारकम्

क्रियान्वयि कारकम्। "राज्ञः दूतः ग्रामं गच्छति" इत्यस्मिन् वाक्ये "गच्छति" इति क्रिया। क्रियया अन्वितानि पदानि -- दूतः (कर्त्ता), ग्रामं (कर्म) च। परन्तु -- राज्ञः, करोति -- इत्यनयोः मिथः अन्वयः नास्ति। राज्ञपदं दूतपदेन एव अन्वितम् अस्ति। अतः राज्ञपदस्य कारकसंज्ञा नास्ति। न कदापि सम्बन्धषष्ठ्याः कारकसंज्ञा। दूतः गच्छति, ग्रामं गच्छति -- उभयत्र क्रियापदेन सह अन्वयः, अतः इमे द्वेऽपि पदे कारकसंज्ञके।

एवं, कारकाणि षट् -- कर्ता, कर्म, करणं, संप्रदानम्, अपादानम्, अधिकरणं -- चेति।

- कर्ता -- रामः गच्छति।
- कर्म -- ग्रामं गच्छति।
- करणं -- पादाभ्यां गच्छति।

- संप्रदानम् -- आचार्याय ददाति।
- अपादानम् -- वृक्षात् पतति।
- अधिकरणं -- आसन्दे उपविशति।

एतानि कारकानि क्रियया कथम् अन्वितानि भवन्ति? क्रियायाः कर्ता स्यात्, क्रियायाः निमित्तं वा स्यात्। कारकं द्विधा --

- क्रियायाः निर्वर्तकं कारकम् -- करोति इति कारकम् (रामः गच्छति यथा)
- क्रियायाम् इति वा -- क्रियानिमित्तं कारकम् (वृक्षात् पतति यथा)

कारकं विवक्षानुसारं वक्तव्यम्। यतो हि कस्मिंश्चित् वाक्ये मुख्यकर्ता (स्वतन्त्रकर्ता) गौणकर्ता (परतन्त्रकर्ता) वा स्यात्। "देवदत्तः इन्धनेन स्थाल्याम् अन्नं पचति" इति किञ्चन वाक्यम्। खण्डशः त्रयः कर्तारः --

- देवदत्तः पचति (कर्त्ता)
- स्थाली पचति (अधिकरणम्)
- इन्धनं पचति (करणम्)

कर्त्ता, अधिकरणं, करणं च -- अत्र क्रियायाः निर्वर्तकं कारकं स्यात्। अतः प्रथमावृत्तौ "क्रियायाः सिद्धौ" इति उच्यते। यदि खण्डशः उच्यते, तर्हि अधिकरणकर्ता स्वतन्त्रः, करणकर्ता स्वतन्त्रः वा। अन्यथा मुख्यकर्ता एव स्वतन्त्रः, न तु अन्ये गौणकर्तारः।

- मेघात् विद्युत् विद्योतते (अपादानम्)
- मेघे विद्युत् विद्योतते (अधिकरणम्)
- मेघः विद्योतते (कर्त्ता)

अन्यत्रापि कर्तृत्वं स्यात् -- अपादानं यथा। परन्तु, अप्रसिद्धत्वात् कर्तृत्वेन न गण्यते। वृक्षात् पर्णं पतति इति वाक्यम् उद्दिश्य, वृक्षः पतति इति नैव उच्यते।



कर्म, संप्रदानं, अपादानं च -- अत्र क्रियानिमित्तं कारकं स्यात्। अतः प्रथमावृत्तौ "क्रियायां सत्याम्" इति उच्यते।

आदौ कारकसंज्ञा, तदनन्तरं विभक्तिप्राप्तिः। सूत्रेषु "अनभिहिते" इति पदं दृश्यते। अनभिहिते = अनुक्ते। यदि कारकत्वम् अन्यत्र न उक्तं भवति, तर्हि इयं विभक्तिः निर्दिष्टा इत्यर्थः। अग्रे पुनः वर्ण्यते।

| कारके | १.४.२३ | १.४.५५ |
|---|---|---|

१.४.२४ (कारके) ध्रुवमपायेऽपादानम्

यदा अपायः, तदा यत् ध्रुवम् अस्ति (स्थिरम् इत्यर्थः) तत्पदं कारकसंज्ञकम्।

१.४.३२ (कारके) कर्मणा यमभिप्रैति स सम्प्रदानम्

अत्र कर्म करणत्वेन विहितम् इति ध्येयम्। सम्प्रदानपदेन दानक्रिया विहिता स्यात्।

१.४.४२ (कारके) साधकतमं करणम्

१.४.४५ (कारके) आधारोऽधिकरणम्

१.४.४९ (कारके) कर्तुरीप्सिततमं कर्म

अनेन प्रत्येकं कर्मकधातोः एकम् एव कर्म विहितं स्यात्।

१.४.५४ (कारके) स्वतन्त्रः कर्ता

पूर्वं सूचितं यत् कर्ता स्वतन्त्रः परतन्त्रः वा। अत्र, स्वतन्त्रस्य कर्तुः एव कर्तृसंज्ञा, न तु परतन्त्रस्य।

२.३.१ अनभिहिते

२.३.२ (अनभिहिते) कर्मणि द्वितीया

२.३.१३ (अनभिहिते) चतुर्थी सम्प्रदाने

| | |
|---|---|
| २.३.१८ | (अनभिहिते) कर्तृकरणयोः तृतीया |
| २.३.२८ | (अनभिहिते) अपादाने पञ्चमी |
| २.३.३६ | (अनभिहिते दूरान्तिकार्थेभ्यः) सप्तमी अधिकरणे च |
| २.३.४६ | प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा [38] |
| २.३.४७ | सम्बोधने च (प्रथमा) |
| २.३.५० | षष्ठी शेषे |

अनभिहिते इति पदम् उपेक्ष्य अर्थः कल्पनीयः। कर्तुः तृतीया कर्मणिप्रयोगे, अन्यथा प्रथमा। कर्मणः द्वितीया कर्तरिप्रयोगे, अन्यथा प्रथमा। कथम् इति अधुना वर्ण्यते।

## अनभिहिते

३.४.६९ लः (कर्त्तरि) कर्मणि च, (कर्त्तरि) भावे चाकर्मकेभ्यः

अनेन सूत्रेण क्रियापदं कर्तरि कर्मणि वा। क्रियापदं कर्तरि चेत्, कर्ता उक्तः क्रियापदेन। क्रियापदं कर्मणि चेत्, कर्म उक्तं क्रियापदेन। कारके उक्ते सति, पुनः विशिष्टविभक्तिप्राप्तिः नास्ति। प्रथमाविभक्तिप्राप्तिः एव अवशिष्टा भवति।

२.३.४६ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा

२.३.४६ (म॰भा॰) तिङ्समानाधिकरणे प्रथमा

महाभाष्यवचनं स्पष्टीकरोति यत् -- क्रियया उक्तस्य कारकस्य प्रथमा विभक्तिः एव प्राप्यते -- इति। अर्थोऽयं सूत्रे अन्तर्हितम्। तथाऽपि अनेन वचनेन अवगमनं सरलतरं स्यात्।

कर्त्तरि प्रयोगे, कर्म अनभिहितं क्रियापदेन। अतः अनभिहिते कर्मणि द्वितीया। एवमेव कर्मणि प्रयोगे, कर्त्ता अनभिहितः क्रियापदेन। अतः अनभिहिते कर्तृकरणयोः तृतीया।

[38] "अन्यथा प्रथमा" इति सरलार्थः।



कुत्र अभिहितम्? तिङ्कृत्तद्धितसमासैः अन्यतमेन अभिहितं स्यात्। अतः एव एषु बहुषु सूत्रेषु अनभिहिते-पदम् अनुवर्त्तते ... न केवलं कर्तृकर्मणोः। क्रियापदोक्तिः तु उदाहृतम्। कृत्तद्धितसमासोदाहारः[39] अग्रे क्रियते।

## कृति

एतावता कर्तुः प्रथमा तृतीया वा, कर्मणः प्रथमा द्वितीया वा प्रयुक्ता। एतयोः कर्तृकर्मणोः अपरविभक्तिप्राप्तिः किं वर्त्तते? "रामः घटं प्रक्षालयति" इति किञ्चित् वाक्यम्। "रामः घटस्य प्रक्षालनं करोति" इत्यत्र प्रयोगान्तरम्। प्रथमवाक्ये कर्मणः प्रथमा। द्वितीयवाक्ये कर्मणः षष्ठी, यद्यपि कर्तरिप्रयोगे प्रयुक्तः।

२.३.६५ (अनभिहिते) कर्तृकर्मणोः कृति (षष्ठी)

अत्र, कृत्प्रयोगे अनभिहितस्य कर्तुः कर्मणः वा षष्ठीविभक्तिप्राप्तिः। "रामः घटस्य प्रक्षालनं करोति" इत्यत्र कर्म एव अनभिहितम्। अतः तस्य कर्मणः षष्ठी। किन्तु सर्वत्र स्थितिः एवं नैव दृश्यते, यथा -- "रामः शब्दम् उक्तवान् अस्ति"। अत्र तु कृत्प्रयोगे कर्मणः द्वितीयाविभक्तिः एव, यद्यपि कर्म अनभिहितम्। किम् अपवादो वर्त्तते?

२.३.६९ न लोकाव्ययनिष्ठाखलर्थतृनां (षष्ठी)

अत्र षष्ठीविभक्तिप्राप्तेः निषेधः। लः (शतृशानचौ), अव्ययं (क्त्वा, ल्यप्, तुमुन्), निष्ठा (क्तक्तवतू) इत्यादिषु प्रयोगेषु अपवादः। अतः पूर्वसूत्रम् अत्र अकार्यम्। एवं सामान्यवाक्येषु प्रयोगः।

३.२.७१ (अनभिहिते) कृत्यानां कर्तरि वा (षष्ठी)

अनेन पक्षे "मम कर्तव्यम्", तथैव "मया कर्तव्यम्" वा स्यात्।

[39] कुतूहलिनः चेत् समासोदाहारः -- रामः उद्धृतोदनां स्थालीं वीक्षते -- इति। उद्धृतम् ओदनं यस्याः सा स्थाली। नाम, स्थाल्याः अपादानत्वम् अपि वर्त्तते, तच्च समासेन उक्तम्।

## अभ्यासः 14

बहूनि सामान्यानि लघु वाक्यानि उच्चार्य, कारकसंज्ञा विभक्तिप्राप्तिः च अवलोकयीना। वाक्येषु कर्तृकर्मणोः आधिक्यम् स्यात्।

# समासः

समासः चतुर्धा --

(१) पूर्वपदार्थप्रधानः अव्ययीभावः -- उपवृक्षं, ससिद्धिम्
(२) उत्तरपदार्थप्रधानः तत्पुरुषः -- राजपुरुषः
(३) अन्यपदार्थप्रधानः बहुव्रीहिः -- चक्रपाणिः
(४) उभयपदार्थप्रधानः द्वन्द्वश्च -- रामकृष्णौ

पूर्वमेव भवतां सामान्यं समासज्ञानं वर्तते इति अपेक्षा। नो चेत्, अन्यस्मात् ग्रन्थात् विषयोऽयं ज्ञातव्यः।

| प्राक्कडारात् समासः | २.१.३ | २.२.३७ |
|---|---|---|

अस्मात् सूत्रात् आरभ्य समाससूत्राणि विहितानि। अत्र कानिचन पदानि सूत्रपाठे भवद्भिः अभिज्ञातुं शक्यते।

| सह सुपा | २.१.४ | २.२.२२ |
|---|---|---|
| अव्ययीभावश्च | २.१.५ | २.१.२१ |
| तत्पुरुषः | २.१.२१ | २.२.२३ |

२.१.२२ द्विगुश्च
१.२.४१ तत्पुरुषः समानाधिकरणः कर्मधारयः
२.१.५४ उपमानानि सामान्यवचनैः
२.२.२३ शेषो बहुव्रीहिः



२.२.२९ चार्थे द्वन्द्वः

लघुसिद्धिः एव अत्र अवलोक्यते। वेदस्य अध्यापकः इति किञ्चित् लौकिकविग्रहवाक्यम्। शास्त्रीयरीत्या अस्य समाससिद्धिः यथा --

वेद ङस् अध्यापक सु *सम्बन्धषष्ठी, षष्ठ्यन्तं पदं पूर्वम्*
२.२.८ षष्ठी (तत्पुरुषः विभाषा सुप् सह सुपा समासः) [40]
१.२.४३ प्रथमानिर्दिष्टं समास उपसर्जनम्
२.२.३० उपसर्जनं पूर्वं (समासः)

वेद ङस् अध्यापक सु *प्रातिपदिकसंज्ञां भूत्वा सुपोः लुक्*
१.२.४६ कृत्तद्धितसमासाश्च (प्रातिपदिकम्)
२.४.७१ सुँपो धातुप्रातिपदिकयोः (लुक्)

वेद अध्यापक *प्रातिपदिकात् परं पूर्ववत् सुप्प्रत्ययः*
वेद अध्यापक सुँ = वेदाध्यापकः

समासे आदौ पदद्वयम्। प्रायेण द्वेऽपि पदे सुप्प्रत्ययसहिते। सूत्रे प्रथमाविभक्त्या निर्दिष्टम् उपसर्जनसंज्ञया पूर्वं तिष्ठति। समासान्तपदं प्रातिपदिकसंज्ञां प्राप्य, सुपः लुक् भूत्वा, पुनः सुप्प्रत्ययः योजनीयः। सुबन्तसिद्धिः कार्या। अयं लघ्वंशः एव अत्र उपस्थाप्यते।

१.१.४३ न वेति विभाषा

| विभाषा | २.१.११ | २.२.२९ |
|---|---|---|

समासः द्विधा -- अनित्यसमासः नित्यसमासः च। सामान्यसमासाः अनित्याः। अतः "विभाषा" इत्यस्य अनुवृत्तिः सर्वत्र गम्यते समासप्रकरणान्तः पर्यन्तम्। यतो हि विभाषाधिकारे समासाः

[40] सूत्रम् इदं सर्वत्र प्रयुज्येत इति शङ्का स्यात्। "न निर्धारणे" २.२.१० इत्यारभ्य नकारस्य अनुवृत्तिः।

अनित्याः, स्वपदविग्रहवाक्यवचनं शक्यम्। राज्ञः पुरुषः राजपुरुषः यथा। नो चेत्, तादृशं विग्रहवाक्यं नैव वक्तुं शक्यते।

२.२.१७ नित्यं क्रीडाजीविकयोः (अका षष्ठी तत्पुरुषः सह सुपा सुप् समासः)

अनेन सुत्रेण -- दन्तलेखकः, नखलेखकः -- वा उदाह्रियते। नित्यसमासोऽयम्। अतः विग्रहवाक्यं नैव वक्तुं शक्यते।

### अभ्यासः 15

(१) देवपूजकः, अर्थगौरवं, भूभर्ता -- इत्येतेषां षष्ठीतर्पुरुषपदानां व्युत्पत्तिं दर्शयत।
(२) त्रयाणाम् अपि लौकिकविग्रहवाक्यं, शास्त्रीयविग्रहवाक्यं (अलौकिकविग्रहवाक्यम्) च दर्शयत

## संज्ञापरिभाषप्रकरणम् १

अभ्यासार्थं संज्ञासूत्राणाम् अवलोकनं पुनः क्रियते। प्रायेण एतानि पदानि एतावता परिचितानि एव। संप्रति प्रथमावृत्तिः अपि अवश्यं पठ्या।

१.१.९ तुल्यास्यप्रयत्नं सवर्णम्

सवर्णता स्थानानुगुणम्, आभ्यन्तरप्रयत्नानुगुणं च। बाह्ययत्नानुगुणं सवर्णता नैव विहिता। तर्हि किमर्थं बाह्यप्रयत्नः विहितः? यदा केनापि सूत्रेण नैके आदेशाः विहिताः, बहूनां सवर्णता वर्त्तते च, तदा बाह्यप्रयत्नानुगुणं कश्चित् आदेशः चेतव्यः।

१.३.१० यथासङ्ख्यमनुदेशः समानाम्

यत्र स्थानिनः आदेशस्य (आगमस्य) च सङ्ख्यायाः साम्यं वर्त्तते, तत्र सर्वत्र सूत्रम् इदं प्रयोज्यम्।

१.१.४९ स्थानेऽन्तरतमः (स्थाने)



यत्र स्थानिनः आदेशस्य च सङ्ख्यायाः साम्यं नास्ति, तत्र सर्वत्र सूत्रम् इदं प्रयोज्यम्। आदौ सवर्णतानुगुणम् आदेशः चेतव्यः। तदनन्तरं बाह्ययत्नानुगुणम् आदेशः चेतव्यः।

१.१.६८ अणुदित् (स्वं रूपं) सवर्णस्य चाप्रत्ययः

अत्र वर्ग्यसवर्णता अपेक्षिता। "वर्ग्यो वर्ग्येण सवर्णः" इति शिक्षासूत्रम्। अपवादत्वेन वा ज्ञातव्यम्।

१.१.६९ तपरस्तत्कालस्य (सवर्णस्य स्वं रूपम्)
१.१.१ वृद्धिः आदैच्
१.१.२ अदेङ् गुणः

"तपरस्तत्कालस्य" इत्यस्य प्रथमावृत्तिः द्रष्टव्या, उभेऽपि समासविग्रहवाक्ये परिशीलनीये। आदैच् इत्यत्र ऐच् इत्यनेन तकारस्य सम्बन्धः इति ज्ञातव्यम्। आ इत्यनेन अकारग्रहणशङ्का नैव वर्त्तते, यतो हि अण्-इत्यस्मिन् आकारः अन्यतमः नास्ति।

१.१.५० उः अण् रपरः (स्थाने)

अनेन ऋकारस्थाने गुणः वृद्धिः वा रपरः भवति। अनेन सूत्रेण, "स्थानेऽन्तरतमः" इत्यनेन सूत्रेण च, ऋकारस्य गुणः अर् इति। ऌकारः अपि सूत्रे प्रयुक्तः इति। कृत्रिमम् इव भासते। तथाऽपि निजसूत्रात्, वार्तिकाबलात् वा ऌकारस्य गुणः अल् इति ज्ञातव्यम्।

१.१.५९ अदर्शनं लोपः (इति)
१.१.६१ प्रत्ययलोपे प्रत्ययलक्षणम्
१.१.६० प्रत्ययस्य (अदर्शनं) लुक्श्लुलुपः

प्रत्ययलोपे इत्यत्र संपूर्णप्रत्ययलोपः विहितः, न तु इत्मात्रस्य लोपः। लुमता[41] { लुक्, श्लु, लुप् } इत्येतैः लोपः निर्दिष्टः। प्रत्येकं लुमतः कार्यान्तरं च वर्त्तते।

[41] लु अस्य अस्ति इति लुमान्, तस्य लुमता।

१.१.६२ न लुमता अङ्गस्य (प्रत्ययलोपे प्रत्ययलक्षणम्)

यद्यपि प्रत्ययलोपे प्रत्ययलक्षणं वर्त्तते, अङ्गकार्यं नैव विहितम् इत्यर्थः।

## संज्ञाप्रकरणम्

संज्ञां कृत्वा, अग्रे अधिकारद्वारम् उद्घाट्य इति बहुत्र उक्तं ग्रन्थेऽस्मिन्। वस्तुतया संज्ञा नैव कार्या। सा संज्ञा तु वर्त्तते एव, प्रयोजनं नास्ति चेदपि। अतः वयं तु केवलं संज्ञां निवेदयामः इति ज्ञातव्यम्। आदौ ग्रन्थेऽस्मिन् संज्ञासूत्रमपि विधिसूत्रम् इव प्रयुक्तानि इति निवेदितम्। तेन वचनेन प्रवेशः सरलतरः इति धिया।

१.१.७ हलोऽनन्तराः संयोगः

१.१.८ मुखनासिकावचनोऽनुनासिकः

१.१.४२ सुडनपुंसकस्य (सर्वनामस्थानम्)

१.१.४३ न वेति विभाषा

१.१.६४ अलोऽन्त्यात् पूर्व उपधा

१.२.४१ अपृक्त एकाल्प्रत्ययः

१.२.४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम्

१.२.४६ कृत्तद्धितसमासाश्च (प्रातिपदिकम्)

कश्चित् सामान्यजननी स्वपुत्रस्य नामकरणं राम-नाम्ना कृतवती। अत्र तु राम-प्रातिपदिकं रूढि, प्रत्ययरहितम्। अन्या महिला स्वगुरुं प्रति गच्छति। सः च स्वामी दिव्यदृष्ट्या बालकस्य महत्त्वं लक्षयित्वा, "आत्मनि रमते रामः" इति उद्देशेन रामनाम उच्चारयति। अत्र तु राम-प्रातिपदिकं योग्यं, प्रत्ययसहितम्। विवक्षानुसारं अनयोः सूत्रयोः अन्यतमेन प्रातिपदिकसंज्ञा स्यात्।

१.३.२ उपदेशेऽजनुनासिक इत्



सूत्रमिदं इत्प्रकरणप्रतीकः। इत्प्रकरणस्य सर्वाणि अपि सूत्राणि स्मर्तव्यानि।

१.४.१० ह्रस्वं लघु

१.४.११ (ह्रस्वं) संयोगे गुरु

१.४.१२ दीर्घं च (गुरु)

लघु ह्रस्वः इव। दीर्घः गुरु इव। किन्तु महदन्तरम्। यतो हि संयोगे परे ह्रस्वाक्षरं गुरुसंज्ञकम्।

१.४.१३ यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्

अङ्गम् इत्यस्य सामान्यसंज्ञा, विशिष्टसंज्ञा च वर्त्तते। राम + सुँ इत्यत्र राम इत्यस्य सामान्याङ्गसंज्ञा। पठ् + शप् + तिप् इत्यत्र {पठ्} इत्यस्य सामान्यसंज्ञा, { पठ् + शप् } इत्यस्य विशिष्टसंज्ञा। एतं बोधयितुं सूत्रे "तदादि प्रत्यये" इति बोधितम्। यदि सामान्यसंज्ञा एव अपेक्षिता "यस्मात् प्रत्ययः तत् अङ्गम्" इति सूत्रं पर्याप्तं स्यात्।

१.४.१४ सुँप्तिङन्तं पदम्

१.४.१७ स्वादिषु असर्वनामस्थाने (पदम्)

१.४.१८ यचि भम्

यथा पूर्वं विवृतम् -- आदौ सामान्यलौकिकपदसंज्ञा, अनन्तरं विशिष्टव्याकरणसंज्ञा। समनन्तरम् अपवादत्वेन इव भ-संज्ञा। किन्तु विधिसूत्राणाम् एव अपवादः ननु? सत्यं, अस्मिन् भागे तु स्थितिः विशिष्टा यतो हि परिभाषासूत्रम् इदं वर्त्तते --

| १.४.१ | २.२.३७ | आकडारादेका संज्ञा |
|---|---|---|

नाम, अस्मिन् अधिकारे यद्यपि बह्व्यः संज्ञाः निर्दिष्टाः, युगपत् द्वे संज्ञे न भवितुम् अर्हतः। अतः पदसंज्ञा भसंज्ञा च युगपत् न भवतः। अपवादः इव, अत्रापि भसंज्ञा एव तिष्ठेत्।

१.३.१ भूवादयो धातवः

३.१.३२ सनाद्यन्ता धातवः

अत्रापि आदौ धातोः सामान्यसंज्ञा, अनन्तरं विशिष्टसंज्ञा च।

१.४.२१ बहुषु बहुवचनम्

१.४.२२ द्वि-एकयोर्द्विवचनैकवचने

एते सूत्रे पूर्वं न विवृते। यतो हि अर्थः अतिसामान्यः। तथाऽपि पाणिनिना सर्वोऽपि अंशः विवृतः।

१.४.९८ लः परस्मैपदम्

१.४.९९ तङानौ आत्मनेपदम्

एनाभ्यां सूत्राभ्यां तिङ्प्रत्ययानां परस्मैपदित्वम्, आत्मनेपदित्वं च।

१.४.१०० तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः

१.४.१०१ (तिङः त्रीणि त्रीणि) तानि एकवचनद्विवचनबहुवचनानि एकशः

१.४.१०२ सुँपः (त्रीणि त्रीणि एकवचनद्विवचनबहुवचनानि एकशः)

१.४.१०३ (सुँपः तिङः त्रीणि त्रीणि) विभक्तिश्च

एतैः सूत्रैः सुपां विभक्तिसंज्ञा वचनसंज्ञा च। तिङां पुरुषसंज्ञा, वचनसंज्ञा च। तिङां विशेषतया विभक्तिसंज्ञा च।

१.४.१०८ परः सन्निकर्षः संहिता

१.४.१०९ विरामोऽवसानम्

सन्धिविधायकसूत्रेषु अनयोः प्रयोजनम्।

३.१.९३ (तत्र धातोः) कृत् अतिङ् (प्रत्ययः)

३.४.११३ (धातोः) तिङ्शित् सार्वधातुकम् (प्रत्ययः परश्च)

३.४.११४ (धातोः) आर्धधातुकं शेषः (प्रत्ययः परश्च)

"तत्र धातोः" इत्यनेन धातोः अधिकारे एव (न तु पूर्वस्थितस्य सूत्रस्य अनुवृत्त्यां) कार्यम् इति स्मर्तव्यम्। सर्वं सार्वधातुकम् आर्धधातुकं वा इत्यपि स्मर्तव्यम्।



# परिभाषाप्रकरणम्

एतावता पारिभाषिकसूत्राणि अज्ञात्वा सूत्रार्थः कल्पितः। इदानीं मुख्यपरिभाषासूत्राणि अपि अवलोकयामः।

१.१.३ इको गुणवृद्धी (गुणः वृद्धिः)

यत्र स्थानिनः अक्षराणि स्पष्टतया न उक्तानि, स्थानिनः विशेषणम् इक् भवितुम् अर्हति च, सूत्रम् इदं प्रयोज्यम्।

"सार्वधातुकार्धधातुकतोः [अङ्गस्य गुणः]" इत्यत्र अङ्गं स्थानी। अङ्गस्य अक्षराणि न निर्दिष्टानि, अतः "सार्वधातुकार्धधातुकयोः अङ्गस्य इकः गुणः" इति ज्ञातव्यम्। "अचो ञ्णिति [अङ्गस्य वृद्धिः]" इत्यत्र अच्-प्रत्याहारेण अक्षराणि निर्दिष्टानि, अतः अत्र परिभाषासूत्रम् इदं कार्यं न करोति।

१.१.४८ षष्ठी स्थानेयोगा

१.१.६५ तस्मिन्निति निर्दिष्टे पूर्वस्य

१.१.६६ तस्मादिति (निर्दिष्टे) उत्तरस्य

आदौ "हरीशः उदयपुरात् जयपुरे गच्छति" इति उक्तम्। अत्र विभक्तिकार्यं स्पष्टतया निर्दिष्टम्। षष्ठीविभक्तिः स्थानिबोधिका। सप्तमीविभक्त्या निर्दिष्टात् पूर्वं स्थानी। पञ्चमीविभक्त्या निर्दिष्टात् परं स्थानी। अवधातव्यम् -- पूर्वं स्थानिदृष्ट्या अपरपदबोधः कृतः। अत्र तु दृष्टिः विपरीता।

१.१.५१ (षष्ठी) अलोऽन्त्यस्य

१.१.५२ (षष्ठी अलोऽन्त्यस्य) ङिच्च

१.१.५३ (षष्ठी) आदेः (अलः) परस्य

१.१.५४ (षष्ठी) अनेकाल्शित् सर्वस्य

एतावता लक्षितम् अस्माभिः यत् स्थानिनः अन्तिमाक्षरस्य स्थाने आदेशः विहितः इति। किन्तु कदाचित् स्थानी अनेकाल् भवति। यदि आदेशः अनेकाल्, तर्हि सर्वस्य स्थानिनः परिवर्तनम्।

यदि आदेशः एकाल्, तर्हि स्थानिनः अन्तिमाक्षरस्य परिवर्तनम्। किन्तु अपवादः अपेक्षितः चेत्? यदि आदेशस्य ङित्, तर्हि स्थानिनः अन्तिमाक्षरमात्रस्य परिवर्तनम्। यदि आदेशः शित्, तर्हि स्थानिनः सर्वस्य परिवर्तनम्।

| आदेशः ईदृशः | इत् | स्थानिनः कार्यस्थानम् |
|---|---|---|
| एकाल् | | अन्तिमाक्षरम् |
| एकाल् | श् | सर्वम् |
| अनेकाल् | | सर्वम् |
| अनेकाल् | ङ् | अन्तिमाक्षरम् |

१.१.७० आदिरन्त्येन सहेता (स्वं रूपम्)

१.१.७१ येन विधिस्तदन्तस्य (स्वं रूपम्)

यदा स्थानिनः विशेष्य-विशेषण-भावः विहितः, तत्र सूत्रम् इदं प्रयोज्यम्। "पदस्य सः" इत्यत्र द्वेऽपि पदे षष्ठीविभक्त्यन्ते। पदस्य इति विशेष्यम्। सः इति विशेषणम्। अतः सकारान्तस्य पदस्य इति वृत्तिः।

बहुशः "अलोन्त्यस्य" इत्यनेन भ्रान्तिः। तत् सूत्रं स्थानिनः कस्य भागस्य आदेशः इति विवृणोति। वर्त्तमानसूत्रं स्थानिनं निर्दिशति। यत्र स्थानिनः विशेषणविशेष्यभावः, तत्र सूत्रमिदं प्रयुक्तं भवति। तदनन्तरं स्पष्टीकृतस्य कुत्र आदेशः इति "अलोन्त्यस्य" इत्यनेन विवृतम्।

१.१.७१ (वा०) अल्ग्रहणेषु यस्मिन् विधिस्तदादौ

सन्धिकार्ये, न केवलं स्थानिनः विशेषणं, प्रत्युत परस्यापि विशेषणं स्यात्। अतः वार्तिकम् इदं विहितम्।

१.४.२ विप्रतिषेधे परं कार्यम्



### अभ्यासः 16

वाच् + सुप्, पठ् + तिप्, इत्येतासां सिद्धीनां सूत्राणि स्मृत्वा, अपेक्षितसंज्ञासूत्राणि, विधायकपरिभाषासूत्राणि च दर्शयत।

# सन्धिप्रकरणम्

कानिचन मुख्यानि सन्धिसूत्राणि अधः अङ्कितानि, यानि च प्रथमावृत्तौ अवलोकनीयानि। सरलानि इमानि सूत्राणि इत्यस्मात् अत्र किमपि विवरणं न अपेक्षितम्। प्रथमावृत्तिस्थानि उदाहरणानि अवश्यं परिशीलनीयानि।

१.४.१०८ परः सन्निकर्षः संहिता

६.१.७४ (संहितायाम्) इको यण् अचि

६.१.७५ (संहितायाम्) एचोऽयवायावः (अचि)

| एकः पूर्वपरयोः | ६.१.८१ | ६.१.१०७ |
|---|---|---|

६.१.८४ (संहितायाम्) आत् (पूर्वपरयोः एकः) गुणः (अचि)

६.१.८५ (संहितायाम् आत् पूर्वपरयोः एकः) वृद्धिः एचि

६.१.९१ (संहितायाम् आत् उपसर्गात् पूर्वपरयोः) एङि (धातौ एकः) पररूपम्

६.१.९४ (संहितायाम् अपदान्तात्) अतो (पूर्वपरयोः एकः पररूपम्) गुणे

६.१.९७ (संहितायाम्) अकः (पूर्वपरयोः) सवर्णे (अचि एकः) दीर्घः

६.१.१०५ (संहितायाम्) एङः पदान्तात् (पूर्वपरयोः एकः पूर्वः) अति

६.१.१०९ (संहितायाम्) अतो रोः अप्लुतात् (उत्) अप्लुते (अति)

### अभ्यासः 17

(१) ससजुषोः रुः इत्यस्मात् सूत्रात् किमर्थः रुँ-आदेशः विहितः? किं प्रयोजनम्? निजरेफान्तप्रातिपदिकपदानां का स्थितिः?

(२) एतानि सूत्राणि पठित्वा, पुस्तकं विना सर्वेषाम् अपि सूत्राणां द्वित्राणि उदाहरणानि लिखत। सर्वत्र किं सूत्रं प्रयुक्तं, किमर्थं प्रयुक्तं च इति दर्शयत। प्रतिसूत्रं तस्य उत्सर्गसूत्राणि, अपवादसूत्राणि च निर्देष्टव्यानि।

(३) राम + अम् = रामम्, हरि + अम् = हरिम्, नदी + अम् = नदीम्। कार्यमिदं साधयितुं कीदृशं सूत्रम् आवश्यकयम्। कस्मिन् अधिकारे, कस्याम् अनुवृत्तौ ऊहितेन सूत्रेण भवितव्यम्?

# कृत्प्रकरणम्

कृदन्तपदानि अस्माकं परिचितानि एव। पुनः किञ्चित् अवलोक्यते।

- तव्यत् — पठितव्यं, चेतव्यं, कर्तव्यम्
- अनियर् — पठनीयं, चयनीयं, करणीयम्
- यत् — चेयं, नेयम्
- ण्यत् — पाठ्यं, पाक्यं (पाच्यं), कार्यम्
- तृच् — पठिता, चेता, कर्त्ता
- क्त — पठितः, चितः, कृतः
- क्तवतुँ — पठितवान्, चितवान्, कृतवान्
- घञ् — पाठः, पाकः
- अच् — चयः, जयः, नयः
- क्तिन् — पठितिः, पक्तिः, चितिः, कृतिः
- ल्युट् — पठनं, पचनं, चयनं, करणम्
- तुमुँन् — पठितुं, चेतुं, कर्तुम्
- क्त्वा — पठित्वा, चित्त्वा, कृत्वा



## गुणवृद्धी

कृति परे, अङ्गस्य धातोः कुत्रचित् गुणः दृश्यते, अपरत्र वृद्धिः (आ, ए, ऐ)। कुतः? गुणसूत्राणि पठितानि एव।

७.३.८४ (अङ्गस्य गुणः) सार्वधातुकार्धधातुकयोः

७.३.८६ (अङ्गस्य) पुगन्तलघूपधस्य च (गुणः सार्वधातुकार्धधातुकयोः)

सर्वेऽपि प्रत्ययाः सार्वधातुकानि आर्धधातुकानि वा। अतः सर्वत्र अङ्गस्य गुणः कार्यः एव। तर्हि किं वृद्धिकरणम् अस्य अपवादः? आम्।

७.२.११५ (अङ्गस्य) अचो (वृद्धिः) ञ्णिति

७.२.११६ (अङ्गस्य) अत उपधायाः (वृद्धिः ञ्णिति)

यदि कृत्प्रत्यये ञकारः णकारः वा स्यात्, अजन्तस्य अङ्गस्य वृद्धिः, अकारस्य उपधायाः वृद्धिः च। इकः उपधायाः तु गणः एव विहितः।

## इडागमः

धातवः परस्मैपदिनः आत्मनेपदिनः वा। तिङ्प्रत्ययाः अपि परस्मैपदिनः आत्मनेपदिनः वा। प्रत्ययः धात्वनुकूलः भवति।

एवम् एव -- कृदन्तरूपेषु कुत्रचित् इकारः दृश्यते, पठितुं यथा। कुत्रचित् न दृश्यते, कर्तुं यथा। एषः इडागमः कदा भवति? धातवः सेटः नेटः (वेटः) वा[42]। तथैव कृत्प्रत्ययाः सेटः नेटः वा। अत्रापि प्रत्ययः धात्वनुकूलः स्यात्। यदि धातुः सेडनुकूलः कृत्प्रत्ययः च सेडनुकूलः, तर्हि इडागमः भवति। कथं ज्ञायते प्रत्ययस्य इडनुकूलता?

३.४.११३ (धातोः) तिङ्शित् सार्वधातुकम् (प्रत्ययः परश्च)

३.४.११४ (धातोः) आर्धधातुकं शेषः (प्रत्ययः परश्च)

७.२.३५ (अङ्गस्य) आर्धधातुकस्य इट् वलादेः

---

[42] इटा सह = सेट्। न इट् = नेट्। वा इट् = वेट्।

हल् - यकारः = वल्। वलादेः आर्धधातुकस्य प्रत्ययस्य इडागमः। तुमुन् कश्चित् वलादिः आर्धधातुकप्रत्ययः। पठ् + तुमुँन् ⇨ पठ् + तुमुन् + इट्। किन्तु, अपेक्षितम् अस्ति "पठ् + इट् + तुमुँन्" ननु? किमर्थम् अत्र इडागमः स्थानिनः पूर्वः, न तु स्थानिनः परम्? टित् किमपि सूचयेत्? यदा टकारः वर्त्तते, आदेशः स्थानिनः आदौ आगच्छेत्?

१.१.४५ आद्यन्तौ टकितौ

अतः, आदौ एव इडागमः। किन्तु, कुत्रचित् वलादेः इडागमः न दृश्यते, ण्वुल्प्रत्ययस्य यथा। किम् अपवादो वर्तते?

७.२.८ (अङ्गस्य) नेड् वशि कृति

कृदन्तसिद्धौ एव इडागमः निषिद्धः वशि। वल् - वश् = झल्। कृति झलि इडागमः इति फलितार्थः ज्ञेयः।

## सिद्धिः

पठितिः इत्यस्य सिद्धेः आकारः --

पठ् + क्तिन् *पठ्धातुः इड्नुकूलः*

७.२.३५ (अङ्गस्य) आर्धधातुकस्य इट् वलादेः

१.१.४५ आद्यन्तौ टकितौ

पठ् + इट् + क्तिन् *इतां लोपः*

पठ् + इ + ति *कृदन्तस्य समुदायस्य प्रातिपदिकसंज्ञा*

१.२.४६ कृत्तद्धितसमासाश्च

पठिति + सुँ = पठितिः

## कृत्प्रत्ययविधायकसूत्राणि

एतानि सर्वाणि अपि सूत्रानि प्रथमावृत्तौ अवलोकनीयानि। सर्वत्र किञ्चित् उदाहरणं ससूत्रं विवरणीयम्। इडागमः, गुणः, वृद्धिः -- एते अंशाः सदा स्मर्तव्याः सिद्धौ।

३.१.९६ (धातोः) तव्यत्तव्यानीयरः (प्रत्ययः परश्च)



३.१.९७ (धातोः) अचो यत् (प्रत्ययः परश्च)

३.१.१२४ (धातोः) ऋहलोः ण्यत् (प्रत्ययः परश्च)

३.१.१३३ (धातोः) ण्वुल्तृचौ (प्रत्ययः परश्च)

७.१.१ (अङ्गस्य) युवोरनाकौ

३.२.१०२ (धातोः) निष्ठा (प्रत्ययः परश्च)

१.१.२५ क्तक्तवतू निष्ठा

३.३.१८ (धातोः) भावे (घञ् प्रत्ययः परश्च)

३.३.५६ (धातोः) एः अच् (अकर्त्तरि च कारके संज्ञायां भावे प्रत्ययः परश्च)

३.३.९४ (धातोः) स्त्रियां क्तिन् (अकर्त्तरि च कारके संज्ञायां भावे प्रत्ययः परश्च)

३.३.११५ (धातोः) ल्युट् च (नपुंसके भावे प्रत्ययः परश्च)

३.३.१५८ (धातोः) समानकर्त्तृकेषु तुमुन् (इच्छार्थेषु प्रत्ययः परश्च)

३.४.२१ (धातोः) समानकर्त्तृकयोः पूर्वकाले (क्त्वा प्रत्ययः परश्च)

## अभ्यासः 18

आदौ, पठितम् इत्यारभ्य बहूनां कृत्प्रत्ययानां द्वित्राणि उदाहरणानि दर्शितानि। प्रत्येकं प्रत्ययस्य अन्यतमं चित्त्वा, सिद्धिं ससूत्रं दर्शयत। सर्वेषाम् उदाहरणानां सिद्धिं वा दर्शयत।

# चुरादिगणः

धातूनां दशगणाः। तेषु चुरादिगणः अन्यतमः, यस्य सिद्धिः अधुना अवलोक्यते। चुरादिगणस्य विकरणप्रत्ययः णिच्। अस्यां सिद्धौ, णिजन्तस्य समुदायस्य विशिष्टधातुसंज्ञा कार्या। अतः, पुनः सामान्यविकरणप्रत्ययोऽपि दृश्यते। अन्यत् सर्वं पूर्ववत् कार्यम्।

चुर् + तिप्

३.१.२५ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण-चुरादिभ्यो (धातोः) णिच् (प्रत्ययः परश्च)

चुर् + णिच् + तिप्

१.३.३ (उपदेशे) हलन्त्यम् (इत्)

१.३.७ (उपदेशे प्रत्ययस्य आदिः) चुँटूँ (इत्)

१.३.९ (इत्) तस्य लोपः

चुर् + इ + ति

७.३.८६ (अङ्गस्य) पुगन्तलघूपधस्य च (गुणः सार्वधातुकार्धधातुकयोः)

३.१.३२ सनाद्यन्ता धातवः

चोरि + ति

आदौ चुर् इत्यस्य सामान्यधातुसंज्ञा। परन्तु, अत्र पाणिनिना विशिष्टधातुसंज्ञा कृता। यत्र यत्र सनाद्यन्ताः धातुप्रत्ययाः विहिताः, तत्र तत्र पुनः प्रत्ययान्तस्य समुदायस्य धातुसंज्ञा कार्या। धातुपाठे समुदायः अयं वर्त्तते इव। कस्मिन् गणे? अनिर्दिष्टम् -- अतः शप् इति सामान्यविकरणप्रत्ययः। नाम, भ्वादिगणे वर्त्तते इव। अतः चोरि इत्यस्य धातुसंज्ञा। पुनः पूर्ववत् सर्वं कार्यम्।

३.१.५ गुप्तिज्किद्भ्यः सन्

३.१.२५ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण-चुरादिभ्यो (धातोः) णिच् (प्रत्ययः परश्च)

३.१.३२ सनाद्यन्ता धातवः

णिच्-विधायकसूत्रं सनादिसमुदाये वर्त्तते, अतः अत्रापि विशिष्टधातुसंज्ञा कार्या।

चोरि + ति

३.१.३२ सनाद्यन्ता धातवः

३.१.६८ कर्तरि (धातोः) शप् (प्रत्ययः परश्च सार्वधातुके)

चोरि + शप् + तिप्

१.३.३ (उपदेशे) हलन्त्यम् (इत्)

१.३.८ (उपदेशे प्रत्ययस्य आदिः) लशक्वतद्धिते (इत्)



१.३.९ (इत्) तस्य लोपः

चोरि + अ + ति

३.४.११३ (धातोः) तिङ्शित् सार्वधातुकम् (प्रत्ययः परश्च)

७.३.८४ (अङ्गस्य गुणः) सार्वधातुकार्धधातुकयोः

१.१.३ इको गुणवृद्धी (गुणः वृद्धिः)

चोरे + अ + ति

६.१.७५ (संहितायाम्) एचोऽयवायावः (अचि)

चोरय् + अ + ति = चोरयति

### अभ्यासः 19

धातुपाठम् उद्घाट्य, चुरादिगणस्थान् द्वित्रान् सामान्यधातून् चित्त्वा, रूपाणि ससूत्रं दर्शयत।

## णिजन्तप्रकरणम्

अप्रेरणार्थे (सामान्यकर्त्तरि) चुरादिभ्यो णिच्-प्रत्ययः विहितः। प्रेरणार्थे हेतुमति अपि अपरेण सूत्रेण णिच्-प्रत्ययः विहितः। यतो हि प्रत्ययः सः एव, न कोऽपि अनुबन्धभेदः अननुबन्धभेदः वा प्रत्ययस्य, सिद्धिः समाना, यद्यपि एकत्र प्रेरणा अपेक्षिता, अपरत्र न तथा।

३.१.२६ (धातोः) हेतुमति च णिच् (प्रत्ययः परश्च)

णिजन्तस्य धातोः णिजन्तप्रत्ययः पुनः नैव योजनीयः। अतः, चुरादिगणस्य णिजन्तरूपम् अणिजन्तरूपं च समाने। अन्येषां न तथा। अतः पठति, पाठयति। खादति, खादयति।

### अभ्यासः 20

धातुपाठम् अवलोक्य, द्वित्रान् धातून् चित्त्वा, णिजन्तरूपाणि ससूत्रं दर्शयत।

### कारकम्

णिजन्तवाक्येषु कर्तृद्वयं -- निजकर्ता, प्रेरकश्च। कस्य का विभक्तिप्राप्तिः? स्मरणम् इति काचित् क्रिया। कर्ता बालकः। प्रेरकः जनकः। अतः बालकः स्मरति, जनकः स्मारयति। वयं जानीमः यत् -- जनकः स्मारयति, जनकाः स्मारयन्ति च। अतः क्रियापदेन प्रेरकस्य समानाधिकरणत्वं, न तु स्मर्तुः स्मानाधिकरणत्वम्।

- जनकः -- प्रेरकः, क्रियापदेन समानाधिकरणत्वम्, उक्तकर्ता
- बालकः -- स्मर्ता, क्रियापदेन समानाधिकरणत्वं नास्ति, अनुक्तकर्ता

अतः, यद्यपि जनकः बालकः च कर्तारौ, भेदः वर्त्तते। कर्त्तरि प्रयोगे, अनुक्तकर्तुः स्मर्तुः तृतीयाविभक्तिः। अतः -- जनकः बालकेन स्मारयति -- इति वाक्यम्। कुत्रचित् निजकर्तुः द्वितीयाविभक्तिः दृश्यते लोके -- माता बालकं खादयति -- यथा। अपवादत्वेन ज्ञातव्यम्।

| | |
|---|---|
| १.४.५२ | गतिबुधिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम् अणिकर्ता स णौ (द्वितीया) |

### अभ्यासः 21

हेतुमति, द्वित्रान् वाक्यान् रचयत। कारकप्राप्तिः विभक्तिप्राप्तिः च ससूत्रं दर्शयत।

## तद्धितप्रकरणम्

एतावता यदि कस्याश्चित् सिद्धेः आकारः दर्शितः, भवन्तः स्वयम् एव प्रथमावृत्तिम् अवलोकयन्तः प्रायेण सर्वमपि अवगन्तुं शक्नुवन्ति। तथा "औपगवः" इत्यस्य सिद्धिः अत्र दर्श्यते। लौकिकविग्रहवाक्यम् "उपगोः अपत्यम्" इति।

### अभ्यासः 22

एषा सिद्धिः भवद्भिः स्वयमेव अवगन्तव्या। "समर्थानां प्रथमाद् वा" इति सूत्रावगमने कश्चित् क्लेशः स्यात्। अस्य सूत्रस्य प्रथमावृत्तिं द्विः त्रिः वा श्रद्धया पठिते सति, तस्य अर्थः आविर्भवति।



उपगु ङस्

| | |
|---|---|
| ४.१.८२ | समर्थानां प्रथमाद्वा |
| ४.१.७६ | तद्धिताः |
| ४.१.९२ | (ङ्याप्प्रातिपदिकात्) तस्य अपत्यम् (समर्थानां प्रथमाद् वा तद्धिताः प्रत्ययः परश्च) |
| ४.१.८३ | प्राग्दीव्यतोऽण् (प्रत्ययः परश्च) |

उपगु ङस् अण्

| | |
|---|---|
| १.२.४६ | कृत्तद्धितसमासाश्च (प्रातिपदिकम्) |
| २.४.७१ | सुँपो धातुप्रातिपदिकयोः (लुक्) |
| १.१.६० | प्रत्ययस्य (अदर्शनं) लुक्श्लुलुपः |

उपगु अण्

| | |
|---|---|
| १.३.३ | (उपदेशे) हलन्त्यम् (इत्) |
| १.३.९ | (इत्) तस्य लोपः |
| १.४.१३ | यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् |

उपगु अ

| | |
|---|---|
| ७.२.११७ | (अङ्गस्य) तद्धितेषु अचाम् आदेः (वृद्धिः अचो ञ्णिति) |
| १.१.१ | वृद्धिरादैच् |
| १.१.४९ | स्थानेऽन्तरतमः (स्थाने) |

औपगु अ

| | |
|---|---|
| १.४.१८ | यचि भं (स्वादिषु असर्वनामस्थाने) |
| ६.४.१४६ | (अङ्गस्य भस्य) ओः गुणः (तद्धिते) |
| १.१.२ | अदेङ् गुणः |
| १.१.४९ | स्थानेऽन्तरतमः (स्थाने) |

औपगो अ

| | |
|---|---|
| ६.१.७५ | (संहितायाम्) एचोऽयवायावः (अचि) |

१.३.१० यथासङ्ख्यमनुदेशः समानाम्

औपगव् अ

१.२.४६ कृत्तद्धितसमासाश्च (प्रातिपदिकम्)

औपगव सुँ = औपगवः

## समर्थानां प्रथमाद्वा

स्वयम् एव सिद्धिम् अवगन्तुं, भवद्भिः सफलता अनुभूता इति विश्वासः। अग्रे इतोऽपि किञ्चित् विव्रियते --

| समर्थानां प्रथमाद् वा | ४.१.८२ | ५.२.१३९ |
|---|---|---|

एतावत् एव अपेक्षितम् अनेन सूत्रेण, यत् अस्मिन् अधिकारे प्रतिसूत्रे यत् पदम् आदौ निर्दिष्यते, तस्य विभक्त्या निर्दिष्टात् पदात् परं प्रत्ययः नियोजनीयः इति। एतच्च कार्यं विकल्पेन। यथा -- तस्यापत्यं = प्रातिपदिकं + ङस् + अपत्यार्थप्रत्ययः। तथैव -- तस्य समूहः = प्रातिपदिकं + ङस् + समूहार्थप्रत्ययः। तेन निर्वृत्तम् = प्रातिपदिकं + टा + निर्वृत्तार्थकप्रत्ययः।

४.१.९२ (ङ्याप्प्रातिपदिकात्) तस्य अपत्यम् (समर्थानां प्रथमाद् वा तद्धिताः प्रत्ययः परश्च)

४.१.८३ प्राग्दीव्यतोऽण् (प्रत्ययः परश्च)

अपत्यार्थे, कः प्रत्ययः विहितः? निजसूत्रे एव प्रत्ययः अविहितः। यतो हि, उत्सर्गप्रत्ययः बहुषु अर्थेषु प्रयुक्तश्च। अनुवृत्तिः न दृश्यते यतो हि, बहवः अपवादाः सन्ति। उत्सर्गप्रत्ययः अण् इति अत्र अपेक्षितः।

उपगु, अपत्यम् -- अनयोः अर्थसमर्थता वर्त्तते (समासे { समर्थः पदविधिः } इति उक्तम्। सः एव अर्थः अत्रापि)। प्रत्ययः कस्मात् अङ्गात् परम् अपेक्षितम्? सूत्रे प्रथमपदस्य विभक्त्या निर्दिष्टात् पदात् परम्। सूत्रे तस्य इति पदम् आदौ तिष्ठति। "तस्य" इति षष्ठीविभक्त्यन्तं



पदम्। अपेक्षितम् अस्ति उपगोः अपत्यम्, न तु अपत्यस्य अपत्यम्। अतः, { उपगु + ङस् } इत्यस्मात् अङ्गात् परम् अण्-प्रत्ययः योजनीयः, अपत्यार्थे।

तद्धितप्रकरणे, कानिचन प्रसिद्धसूत्राणि अधो निर्दिष्टानि। परिधिः दर्शितश्च। मूलाष्टाध्यायीग्रन्थे अङ्कनीयानि।

| | | |
|---|---|---|
| ४.१.९२ | ४.१.१७६ | तस्यापत्यम् |
| ४.२.१ | ४.२.१२ | तेन (रक्तं रागात्) |
| ४.२.१३ | ४.२.१९ | तत्र (उद्धृतम् अमत्रेभ्यः) |
| ४.२.३६ | ४.२.५३ | तस्य (समूहः) |
| ४.२.९१ | ४.३.१३१ | शेषे |
| ४.३.१३१ | ४.३.१६५ | तस्य विकारः |

## ग्रन्थपरिचयः

अस्माभिः अनेकानि सूत्राणि दृष्टानि। तेषाम् ऋजुक्रमः तु अष्टाध्यायी। किन्तु, प्रक्रियानुसारम् अपि कैश्चन आचार्यैः कृतयः रचिताः।

ऋजुक्रमस्य अष्टाध्याय्याः उपरि व्याख्याः वर्त्तन्ते। प्रथमावृत्तेः परिचयः तु अस्माकम् अस्ति एव। किन्तु कृतौ अस्यां वार्तिकानि प्रत्युदाहरणानि वा नैव दर्शितानि। तत्सर्वम् काशिकायां लभ्यते। काशिकायाः उपरि प्रसिद्धव्याख्याद्वयं वर्त्तते। पुनः अष्टाध्याय्याः उपरि महाभाष्यम्।

गीतायाः भाष्यं गीताभाष्यम् इति उच्यते। एवम् एव उपनिषद्भाष्यम् इत्यादीनि। परन्तु महाभाष्यं नाम व्याकरणमहाभाष्यम् एव। यत्र समस्या वर्त्तते, सा अपहृता स्यात् महाभाष्येण। परन्तु महाभाष्ये कानिचन एव सूत्राणि व्याख्यातानि। काशिकावृत्तिः द्वितीयावृत्तिः मन्तव्या। महाभाष्यं तृतीयावृत्तिः मन्तव्यम्।

प्रक्रियाक्रमः पृथक् नैव प्रकाश्यते, यतो हि का सिद्धिः अपेक्षिता इति ज्ञातव्यं ननु? एवं, वृत्त्या समेतानि इमानि सूत्राणि सिद्धान्तकौमुद्यां प्रकाशितानि। ग्रन्थोऽयं काशिकासदृशः। यथा काशिका, अस्याः उपरि अपि काश्चन व्याख्याः। तत्त्वबोधिनी सामान्यव्याख्या। बालमनोरमा सरलतरा परन्तु केचन दोषाः सन्ति इति पण्डितानां मतम्। बृहच्छब्देन्दुशेखरः प्रौढतरः। कौमुद्याः संक्षिप्तसंस्करणं लघुसिद्धान्तकौमुदी। तस्याः उपरि नैकाः व्याख्याः उपलभ्यन्ते। तासु आर्यभाषया विरचिता भैमीव्याख्या प्रसिद्धा।

## काशिका

काशिकावृत्तेः अपि शैली अत्यन्तसरला।

६.१.७५ (संहितायाम्) एचोऽयवायावः (अचि)

"एचः स्थाने अचि परतः अयवायावित्येते आदेशाः यथासङ्ख्यम् भवन्ति। चयनम्। लवनम्। चायकः। लावकः। कयेते। ययेते। वायाववरुणद्धि।" -- काशिका।

आदौ सामान्यवृत्तिः, अनन्तरं सामान्योदाहरणानि। कयेते इत्यादीनि अपि उदाहरणानि। किम् उदाहृतम् इति प्रश्नः उदेति। अत्र न्यासः आश्रयणीयः -- "कयेते, ययेते" इति। के + एते, ये + एते इति स्थितेऽयादेशः। "वायाववरुणद्धि" इति। वायौ + अवरुणद्धीति स्थित आवादेशः -- इति।



८.४.५३ झलं जश् झशि

"झलां स्थाने जशादेशो भवति झशि परतः। लब्धा। लब्धुम्। लब्धव्यम्। दोग्धा। दोग्धुम्। दोग्धव्यम्। बोद्धा। वोद्धुम्। बोद्धव्यम्। झशि इति किम्? दत्तः। दत्थः। दध्मः।" -- काशिका।

अत्रापि आदौ प्रथमावृत्तिः दर्शिता। बोद्धव्य-पर्यन्तं सामान्योदाहरणानि च। पुनः काशिकाकारः पृच्छति -- झशि इति किम् -- इति। नाम, यदि सूत्रे झशि पदं न अभविष्यत् तर्हि का हानिः इति। काशिकाकारः प्रत्युदाहरणं दर्शयति -- दत्तः, दत्थः, दध्मः -- चेति। नाम, एतानि रूपाणि अपेक्षितानि, अतः चर्च्यमानं सूत्रं नैव प्रयोक्तव्यम्। तच्च कार्यं झशि पदेन दर्शितम्। अथवा भिन्नं रूपं कल्पितम् स्यात् इति।

एवं प्रौढतरानि चर्चाः उदाहरणानि प्रत्युदाहरणानि च काशिकायां विराजन्ते। विशिष्टार्थबोधार्थं प्रयोजनबोधार्थं वा न्यासः पदमञ्जरी वा आश्रयणीयः।

## सिंहावलोकनम्

पूर्वं सूचितं यत् पदसिद्धयः षोढा इति -- सुबन्तसिद्धिः, तिङन्तसिद्धिः, कृदन्तसिद्धिः, तद्धितान्तसिद्धिः, समाससिद्धिः, स्त्रीसिद्धिश्च। स्त्रीसिद्धिं विहाय, सर्वेषां प्रकरणानां केषाञ्चन उदाहरणानां सम्पूर्णसिद्धिः भवद्भिः वक्तुं शक्यते। पुनः वाक्यदृष्ट्या कारकप्रकरणं विभक्तिप्रकरणं च किञ्चित् अवलोकितम्।

अनेन अष्टाध्याय्याः सर्वविधपरिचयः जातः। पुनः पाणिनीयचिन्तनरीतिः भवद्भिः किञ्चित् अवलोकिता। अष्टाध्याय्याः पठनशैली च प्रत्यक्षीकृता।

आग्रन्थं भवद्भिः पठितम् इति आनन्दजनकम्। कृतौ अस्यां न्यूनताः दोषाः वा यत्र वर्त्तन्ते, अथवा अन्यस्मात् अपि हेतोः परिवर्तनम् अपेक्षितम्, तत्सर्वं सूचनीयम्।

# विहङ्गमावलोकनम्

अग्रे किम्? इदानीं भवन्तः समग्रमपि व्याकरणं पठितुं समर्थाः। यतो हि पाणिनेः तन्त्रं ज्ञातं, प्रयोजनम् आस्वादितं, मुख्यप्रकरणानां परिचयः कृतश्च। बहूनि सूत्राणि अवशिष्टानि। मार्गेषु अन्यतमः अधो निर्दिष्टः --

(१) सर्वप्रकरणपरिचयः (ग्रन्थोऽयम्)
(२) कारकस्य समासस्य कृदन्तस्य तद्धितान्तस्य च सामान्यज्ञानम्। यानि सूत्राणि "संस्कृत पठन पाठन की अनुभूत सरलतमविधि" नामकग्रन्थस्य द्वितीयभागे ग्रथितानि, तानि प्रथमावृत्तेः अध्येतव्यानि
(३) प० महाबलेश्वरभट्टस्य ग्रन्थाः -- सन्धिः, समासः, कारकं चेति
(४) लघुसिद्धान्तकौमुदी (आर्यभाषया रचितया भैमीव्याख्यया समेता)

इच्छानुसारं मार्गानुसारम् अनुयातुं भवन्तः समर्थाः एव।

❐



वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम्
पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम्

**ग्रन्थोऽयं समाप्तः**